श्रीजैन–आत्मानन्द–ग्रन्थरत्नमाला–सप्तपञ्चाशत्तमं रत्नम् ( ५७ )

महोपाध्यायश्रीमच्चारित्रसुन्दरगणिविरचितं

# कुमारपालचरित्रमहाकाव्यम् ।

न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरिशिष्यप्रवर्त्तकश्रीमत्कान्तिविजयमुनिशिष्यमुनिचतुरविजयेन संशोधितम् ।

पूज्यपादप्रवर्त्तकश्रीमत्कान्तिविजयान्तेवासिमुनिचतुरविजयोपदिष्ट–अणहिल्लपुरपत्तननिवासि-
प्राग्वाटवंशीयश्रेष्ठि–उमेदचन्द्रात्मज–मगनचन्द्र–भार्या–चन्दनबाइ–द्रव्यसाहाय्येन

प्रकाशयित्री–भावनगरस्था–श्रीजैनआत्मानन्दसभा ।

इदं पुस्तकं मुम्बय्यां वल्लभदास–त्रिभुवनदास गांधी सेक्रेटरी श्रीजैन आत्मानन्दसभा भावनगर इत्यनेन
निर्णयसागरमुद्रणालये कोलभाटवीथ्यां २३ तमे गृहे, रामचंद्र येसू शेडगेद्वारा मुद्रयित्वा प्रकाशितम् ।

वीरसंवत् २४४३. आत्मसंवत् २१. विक्रमसंवत् १९७३.

# ॥ प्रास्ताविकनिवेदनम् ॥

अस्यैतिहासिकप्रधानस्य पद्यरचनावर्णविन्यासललितस्य प्रत्येकसर्गनिवेशितवर्गस्य दशसर्गनिबद्धस्य भविकजनहृदयाल्हादकस्य कुमारपालचरित्रमहाकाव्यस्य रचयितारो मेदपाटभूमिपालविश्राणितसान्वर्थतपा इति बिरुदेन तपोगच्छनायकत्वेन प्रसिद्धिं प्राप्ताना तपस्तेजस्तिरस्कृतमार्त्तण्डमण्डलाना श्रीमज्जगच्चन्द्रसूरीशाना द्वितीयशिष्यस्य वृहत्पौशालिकशाखाप्रकटननिमित्तभूतस्य श्रीमद्विजयचन्द्रसूरेरविच्छिन्नपट्टपरंपराया सजातस्य श्रीमद्रत्नसिंहसूरेः शिष्या महोपाध्यायश्रीचारित्रसुन्दरगणय इति काव्यस्यास्य प्रत्येकसर्गप्रान्तोपनिवेशितपद्यानां प्रशस्तेस्तथैभिरेव महाशयैर्विरचितस्य महीपालचरितमहाकाव्यस्य प्रत्येकसर्गप्रान्तगतस्य—

"श्रीरत्नसिंहगुरुपादसरोरुहालिश्चारित्रसुन्दरकविर्यदिदं ततान। तस्मिन्महीपचरिते भववर्णनाख्य· सर्गः समाप्तिमगमत्किल पञ्चमोऽयम् ॥"

इत्येतस्य पद्यस्य च विलोकनेन स्फुटमेव।

अस्य काव्यस्य मुद्रणात्प्राग् महोपाध्यायश्रीमज्जिनमण्डनगणिविरचितो गद्यपद्यात्मकः श्रीकुमारपालप्रबन्धो मयैव शोधितो मुद्रितश्च भावनगरस्थश्रीजैन—आत्मानन्दसभाया मन्त्रिभिः। तत्र स्थिताश्च सर्वेऽपि प्रबन्धाः प्रायशोऽत्र सक्षेपतो वर्णिताः, केचिच्च परित्यक्ता अपि दृश्यन्ते।

अस्य महाकाव्यस्य प्रणेतृभिर्यद्यपि स्वसत्तासमयः प्रशस्त्यादौ क्वापि साक्षान्नोपनिबद्धस्तथाप्येतद्गच्छीयकृतवृहत्पौशालिकपट्टावलीगतानाम्—

"चक्षुर्बाणमनुप्रमेयसमये १४५२ श्रीस्तम्भतीर्थे पुरे येन श्रीजयपुण्ढूसूरिगुरुणा विश्वप्रसिद्धोत्सवम्।
श्रीमत्सूरिपदं गणोदयपदं श्रीरत्नसिंहप्रभोरद्यापि प्रसरत्प्रतापयशसः सविन्निधे· कारितम् ॥

:: :: :: :: :: :: :: :: :: ::

प्रासादं विमलार्हदादिसकलश्रीतीर्थकृन्मण्डलीं प्रस्वष्टादतिशायिलब्धिनिलयः श्रीरत्नसिंहप्रभु' ।
नन्दाकाशतिथिप्रमेयसमये १५०९ श्रीविक्रमाद्वासरे पञ्चम्या' सितमाघमासि वसुधाधीशार्चिताङ्घ्रिद्वयम् ॥
तत्पाणिपद्मरजसा सुरभीकृताङ्गाः शिष्यास्त्रयः श्रुतधरा' प्रथमस्तु तेषु । श्रीहेमसुन्दरगुरुर्गरिमाम्बुराशिरासीज्जिनप्रवचनस्फुटसौधदीप. ॥
उदितभाग्यविधुप्रसृतोत्तमद्युतिजितान्तरवैरितमस्तति । उदयवल्लभसूरिरथापर' परमसंयमवान् जयति क्षितौ ॥
केनोपमीयत इहाथ तृतीयसूरि. श्रीज्ञानसागर उदारगुणैकराशि. । वार्द्धे' सर' श्रयतु जातु किलोपमान वार्द्धि' कथ सरसमस्ततयापि लक्ष्म्या ॥

ः ः ः ः ः ः ः ः ः ः

तथा श्रीरत्नसिंहसूरीणां पण्डितप्रकाण्डपण्डितश्रीशिवसुन्दरगणिप्रभृतय. शिष्या अपि सप्रभावका बभूवु. ।

ः ः ः ः ः ः ः ः ः ः

तथा महोपाध्यायश्रीमदुदयधर्मगणयो वाक्यप्रकाशग्रन्थ विहितवन्त' । तथाऽन्येऽपि श्रीचारित्रसुन्दरसूरिप्रमुखा' शिष्या ये च महीपालकुमारपालादिसंस्कृतचरितानि वितेनिरे ॥"

इत्येतेषा पद्याना निर्वर्णनेन बृहत्तपागच्छान्तभूर्तबृहत्पौशालिकशाखाभट्टारकश्रीमद्रत्नसिंहसूरिशिष्यत्वान्महोपाध्यायश्रीमच्चारित्रसुन्दरगणीना सत्तासमयोऽपि विक्रमार्कीयपञ्चदशषोडशयोः शतकयोर्मध्यवर्त्तीत्याविष्करणं सर्वथैव घटाकोटीमाटीकते ।

अस्य संशोधनसमये पुस्तकमेकं नातिशुद्धमष्टचत्वारिंशत्पत्रात्मकं चिरन्तनं वडोदराराजकीयपुस्तकालयाद् द्वितीयं चाशुद्धबहुलमष्टचत्वारिंशत्पत्ररूपं नूतनं प्रवर्त्तकश्रीमत्कान्तिविजयमुनिपुङ्गवशास्त्रसंग्रहात्समासादितम् । एतत्पुस्तकद्वितयाधारेण सावधानतया संशोधनं विहितं तथापि दृष्टिदोषेणाक्षरयोजकदोषेण वा यत्र क्वचनाशुद्धिर्वाचकमहाशयाना दृष्टिगोचरमवतरेत तदा तत्र सशोध्य वाचनीयमित्याशास्ते—

प्रवर्त्तकश्रीमत्कान्तिविजयचरणचञ्चरीकः—चतुरविजयो मुनिः ।

॥ अर्हम् ॥

॥ न्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरेभ्यो नमः ॥

श्रीरत्नसिंहसूरिशिष्यमहोपाध्यायश्रीचारित्रसुन्दरगणिविरचितं

# कुमारपालमहाकाव्यम् ।

यत्पादसेवा सुरवृक्षलक्षाद्विशिष्यतेऽत्यद्भुतदानदक्षा । अचिन्त्यमाहात्म्यनिधिः स नित्यं जिनेश्वरो यच्छतु मङ्गलानि ॥ १ ॥ प्रसादपोतं समवाप्य यस्यास्तरन्ति सन्तोऽखिलवाङ्मयाब्धिम् । जाड्यान्धकारव्रजसूर्यरूपा सा शारदा मे वरदा सदास्तु ॥ २ ॥ मुधा मुधा धर्म्मविधिं विधाय यो जैनधर्म्मं विदधे विशुद्धम् । विधूततन्द्रो भविनां मुनीन्द्रस्तनोतु भद्राणि स हेमचन्द्रः ॥ ३ ॥ परोपकारैकनिबद्धचित्तास्ते सन्तु सन्तो मम सुप्रसन्नाः । सुधाभयेह स्वगिरा समग्रं काव्यस्य ये दोषविषं हरन्ति ॥ ४ ॥ दोषान्धकारं सकलं निहत्य शास्त्रं च विश्वं रचयन्ति शुद्धम् । सदा समानन्दितसाधुचक्रास्ते सज्जना मित्रसमा जयन्ति ॥ ५ ॥ मनोहरां सद्गुणहारहूरां हित्वाऽसतीं दोषलतां प्रयाति । इहातिवक्रस्य नितान्तलोला क्रमेलकस्येव खलस्य लोला ॥ ६ ॥ किं निन्द्यते सोऽपि खलः कठोरः कृष्णः कटुः स्नेहविवर्जिताङ्गः । गोमण्डलोच्चैरुपकारयोगात्संजायते गोरसवृद्धिकृद्यः ॥ ७ ॥ खरस्वभावेन खलेन किं वा मां सज्जनः स्वीकुरुतात् कृती

चत् । निशीथिनीशेन विकाशितं यत्तद्बाध्यते किं कुमुदं तमोभिः ॥ ८ ॥ काव्यालङ्कृतिनाटकेषु रसिकस्वान्ताम्बुजाह्ला-
दिनी नास्माकं पटुतास्ति निर्मलतरा शाब्दे न मार्गे मतिः । नार्थेष्वप्यतिनिष्ठता परमिमां कर्तुं कृतार्थां गिरं चौलुक्योरुचरित्रकीर्तनविधौ धन्ये प्रवर्त्तामहे ॥ ९ ॥ महीमहेन्द्रानपरान् विहाय दयाश्रयेद्यं सुभगाग्र्यमत्र । कुमारपालः परमार्हतः स जीयाज्जगज्जन्तुपितामहाभः ॥ १० ॥ विमलयति समस्तं या जगत्पीयमाना सुरसरिदिव तापं सन्ततं संहरन्ती । कथमवितथरूपा तत्कथा निर्व्यथां मे न गिरमिह रसाढ्या सा करिष्यत्यदोषाम् ॥ ११ ॥ श्रियां निवेशो वरिवर्त्ति देशः श्रीगुर्जराख्यो रुचिरप्रदेशः । कृतप्रवेशं सुकृतैर्नितान्तं न पापलेशोऽपि यमत्र भेजे ॥ १२ ॥ नदीषु गङ्गा त्रिदशेषु वज्री नगेषु मेरुः क्षितिपेषु चक्री । मतङ्गजेष्विन्द्रगजः प्रधानो देशः स देशेषु तथाऽखिलेषु ॥ १३ ॥ दानेन मानेन नयेन धात्र्यां यः सर्वदेशाभरणं बभूव । आसीत्सदाचारभरस्य सीमाम्बुधिर्जलानामिव सर्वदा यः ॥ १४ ॥ यस्मिन् स्वकाले तरवः फलन्ति गलन्ति गर्भा नहि कामिनीनाम् । मिलन्ति वित्तानि घनानि पुंसां ज्वलन्ति नो जातु गृहा जनानाम् ॥१५॥ ग्रामा महाद्रङ्गसमानरूपाः स्वर्धामरम्याणि पुराणि यत्र । लोकाः क्षितीशप्रतिमा विभान्ति महीभुजो यत्र सुरेन्द्रतुल्याः ॥ १६ ॥ अस्ति श्रीवनराजराजरचितप्रौढप्रतिष्ठं स्फुटं तत्र श्रीअणहिल्लपाटकमिति प्राप्तप्रतिष्ठं पुरम् । आतङ्कोज्झितमानसाः प्रतिदिनं पूर्णाभिलाषाः स्फुरद्भासो यत्र वसन्ति चित्रजनका देवोपमा मानवाः ॥ १७ ॥ अभ्रंलिहा यत्र विलोक्य सौधश्रेणीध्वजश्रेणिविराजमानाः । सूर्यो निजस्यन्दनभङ्गशङ्काकुलो भवेदभ्रपथेऽपि गच्छन् ॥ १८ ॥ यदीयनारीनयनाननाभ्यां सरोजचन्द्रौ विजितौ विशङ्के । अशिश्रियद्दुस्तरवारिदुर्गमेकं भिया व्योमपथं तथान्यः ॥ १९ ॥ यस्मिन्

गवाक्षस्थितचारुनारीवक्त्रैर्विभोद्भासितदिग्विभागैः । निशीन्दुबिम्बप्रतिमैरजस्रं सहस्रचन्द्रं गगनं विभाति ॥ २० ॥ जिनेन्द्रचैत्यानि पराणि यत्र स्वर्लोकनिःश्रेणिसमानि भान्ति। वाताहतास्तत्र च वैजयन्त्यः सन्तर्जयन्त्यः स्वरिवोल्लसन्ति ॥ २१ ॥ न राजहंसादपरः सरोगो दोषाकरश्चन्द्रमसः परो नो । विहाय भृङ्गं मधुपो न कश्चिद्यस्मिन्न सर्प्पादपरे द्विजिह्वः ॥ २२ ॥ प्रदीपपात्राणि विहाय यत्र स्नेहक्षयोऽन्यत्र निरीक्ष्यते नो । न कण्टकाली वृतिमन्तरेण विलोक्यते तत्र पुरे परत्र ॥ २३ ॥ दानेन मानेन कलाव्रजेन रूपेण सौख्येन बलेन नित्यम् । यस्मिन् वसन्तस्त्रिदशान् हसन्ति धर्मोज्झ्यमानान्निरताः स्वधर्म्मे ॥ २४ ॥ श्रीमूलराजान्वयमौलिरत्नं श्रीपत्तनेऽजायत निःसपत्नः । श्रीभीमदेवो वसुधाप्रधानं नृपः स्ववीर्यार्ज्जितभूरिमानः ॥ २५ ॥ तस्मिन् शासति पाकशासनसमे श्रीभीमदेवे भुवं नाकार्पुः स्थितिमत्र भीतिततयो मुक्त्वारिहृत्काननम् । तन्नारीनयनानि नित्यनिपतन्नीराणि हित्वा क्वचिन्नाभूवन्नतिवृष्टयो विघटितस्फीतेऽतिजाते नृपे ॥ २६ ॥ जाया जयन्ती वपुषा जयन्तीं तस्याभवद्भूमिपतेर्जयन्ती । अगण्यलावण्यगुणेन पूर्णा सा प्रीतिपात्रं परमं बभूव ॥ २७ ॥ तया समं वैषयिकं सुखं स भुञ्जन्ननैषीत्समयं महान्तम् । स्वधीसखे न्यस्तसमस्तभारो न राजकार्याणि विवेद किञ्चित् ॥ २८ ॥ नृपोऽन्यदा कामलताभिधानां स वारनारीमवलोक्य कल्याम् । चकार पत्नीं तरसा रसान्धः कामातुरः किं न नरः करोति ॥ २९ ॥ ताभ्यां रतिप्रीतिमनोहराभ्यां समं स्मराभो बुभुजे स सौख्यम् । योगीव लीनः परमात्मकृत्ये नृपोऽन्वभूदेप महाप्रमोदम् ॥ ३० ॥ कालेन सा कामलता पवित्रमसूत पुत्रं जितमित्रकान्तिम् । यो जातमात्रोऽपि जहार राज्ञो दुःखं नितान्तं निरपत्यतायाः ॥ ३१ ॥ अजीजनत्सूनुमनूनरूपं भूपप्रियान्यापि कुलानुरूपम् । पूर्वेव, सूर्यं हतशत्रुशौर्यं

ल-
ये-
॥

चूलेव मेरोः किल कल्पवृक्षम् ॥ ३२ ॥ क्षेमं करिष्यत्यतुलं कुलस्य क्षमः क्षणादेष रिपून् विजेतुम् । अतोऽभिधां पूर्वसुताय राजा श्रीक्षेमराजेति ददौ वदान्यः ॥ ३३ ॥ दानेन मानेन बलेन कर्णमयं स कर्णोऽनुकरिष्यतीति । श्रीकर्णराजेति स वर्णनीयं नृपोऽन्यपुत्रस्य ततान नाम ॥ ३४ ॥ तावाश्विनेयाविव दिव्यरूपौ परस्परं प्रीतिपरौ कुमारौ । निरीक्ष्य मातापितरौ मनोऽन्तस्तावन्वभूतां परमं प्रमोदम् ॥ ३५ ॥ वृद्धिं बुद्धिमतीभिराशु गमितौ धात्रीभिरेतौ परां धात्रीनाथसुतावधीतसमसच्छास्त्रानभूतां क्रमात् । कामं काममरालमानससमं लावण्यलीलाननं नारीनेत्रचकोरचन्द्रसदृशं तावापतुर्यौवनम् ॥ ३६ ॥ श्रीक्षेमराजो मरुराजपुत्रीं नाम्ना सुतारां गुणबीजधात्रीम् । पितुर्नियोगान्महता महेन स पर्यणैपीदथ दक्षमुख्यः ॥ ३७ ॥ श्रियं जयन्त्या निजरूपकान्त्याः स्वर्णं स्ववर्णेन च तर्जयन्त्याः । कर्णोऽपि कर्णाटनृपाङ्गजायाश्चकार पाणिग्रहणं जयायाः ॥ ३८ ॥ स दातुकामस्तनयाय राज्यमथापदन्तं नृपतिः क्षणेन । अन्यन्नरश्चिन्तयति स्वचित्ते विधिर्विधत्ते द्रुतमन्यदेव ॥ ३९ ॥ ताते मृते राज्यधुरन्धरोऽपि श्रीक्षेमराजो वचनेन राज्ञः । पट्टाभिषेकं विदधे रयेण कर्णस्य वर्णाग्रजपूजितस्य ॥ ४० ॥ निजाग्रजे जाग्रदुग्रसत्त्वे स राज्यचिन्तां सकलां विमुच्य । कर्णो गतर्णीकृतविज्ञचक्रश्चक्रे स्वयं शास्त्रविचारमुच्चैः ॥ ४१ ॥ श्रीकर्णः किमु वर्ण्यते स कविभिः सद्वर्णचिन्तामणिर्विज्ञाम्भोजविकाशवासरमणिर्भूमीशचूडामणिः । स्फूर्जत्कीर्तितरङ्गिणीं दिशि दिशि प्रध्वस्ततापां जना यस्य श्रोत्रपुटैः पिबन्ति विकटैरप्याप्यपूर्णस्पृहाः ॥ ४२ ॥ गोपीपीनपयोधराहतमुरः सन्त्यज्य लक्ष्मीपतेर्मन्ये पङ्कजशङ्कया नयनयोर्विश्राम्यति श्रीस्तव । श्रीमत्कर्णनरेन्द्र ! यत्र चलति भ्रूवल्लरीपल्लवस्तत्र त्रुट्यति भीतिभङ्गुरतया दारिद्र्यमुद्रा यतः ॥ ४३ ॥ इति कविकुलगोष्ठीह-

ष्टचित्तो नितान्तं समयमयमनैषीत्कर्णराजो महान्तम् । प्रतिदिनघनदानैः प्रीणयन् लब्धवर्णान् परमभिमतदातॄन् कल्पवृक्षानजैषीत् ॥ ४४ ॥

॥ इति श्रीकुमारपालचरिते महाकाव्ये वंशवर्णननामप्रथमसर्गे प्रथमो वर्गः ॥ ग्रन्थाग्रं० ६५ ॥

कर्णाय काश्मीरपतिः स्वपुत्रीं प्रैषीदथो मीणलदेविनाम्नीं । चकार पाणिग्रहणं महेन तस्याः स लोकोत्कृतविस्मयेन ॥ १ ॥ चिक्रीड निर्व्रीडतया तयालं समं कियत्कालमसौ नृपालः । श्यामा द्विधाप्यस्य बहुप्रियस्याऽप्रियाभवत्साथ विभाग्ययोगात् ॥ २ ॥ न प्रीतिहेतुः कथितो गुणौघः कस्यापि कोऽप्यत्र भवेदभीष्टः । धिनोति धत्तूरतरुर्महेशं न केतकः सद्गुणसम्भृतोऽपि ॥ ३ ॥ विरक्तचित्तो नृपतिस्ततोऽस्या जग्राह नामापि न शीलवत्याः । धन्याभिरन्याभिरयं वधूभिर्विधूतचिन्तो विललास सार्द्धम् ॥ ४ ॥ बालाबलाबालिशभूमिपाला नटा विटा वानरवारनार्यः । चौराश्वरा याचकवध्यकाश्च भवन्ति नूनं क्षणरागिणोऽमी ॥ ५ ॥ गवेषयन्नेष पुरं नरेशोऽन्यदा गवाक्षे निषसाद दक्षः । मातङ्गनारी मधुरस्वरेण काचित्तदग्रे विततान गानम् ॥ ६ ॥ अगण्यलावण्यगुणस्वरूपं रूपं तदीयं स निरूप्य भूपः । स्मरातुरस्तत्र पराः स्वनारीः सर्वा विसस्मार विचारहीनः ॥ ७ ॥ भुङ्क्ते न भोगान्न रसान् भुनक्ति व्यनक्ति चिन्तां न न वक्ति किञ्चित् । शेतेऽपि नक्तं नहि तत्र रक्तो व्यक्तं नृपोऽशक्त इवाभवत्सः ॥ ८ ॥ विवेकदीपो हृदि तावदेव स्फुरत्यहो ! दर्शितधर्ममार्गः । उन्मूलिताचारविचारवृक्षो न वाति यावत्किल कामवायुः ॥ ९ ॥ अकार्यमेतन्नृपतिः स कार्यमत्राब्रुवन् कर्तुम-

नार्य्ययोग्यम् । दिने दिने क्षीणशशीव कामं स्मरातुरः क्षामतनुर्बभूव ॥ १० ॥ चिन्तानिमित्तं सचिवो रहस्तं पप्रच्छ
वात्सल्यकृदाग्रहेण । अनर्घ्यमप्याख्यदिदं स्वरूपं भूपः स्वरूपप्रतिमाय तस्मै ॥ ११ ॥ मातङ्गपत्न्या सकलं स तस्या वेषं
समानीय मनीषिमुख्यः । समर्प्पयन् मीणलदेविनाम्न्या मन्त्रीश्वरस्तत्समरूपभाजः ॥ १२ ॥ वेषं वहन्ती तदशेषमेषा
रात्रावगान्नूमिपतेः समीपं । तया समं वैषयिकं सुखं स चिरं सिषेवे विषमेषुवश्यः ॥ १३ ॥ सा क्रीडतस्तस्य बहुप्रकारै-
र्मुद्रामलान्मन्दमतेर्नृपस्य । उत्थाय तेनानुमता जगाम सम्पूर्णकामा निजधाम तूर्णम् ॥ १४ ॥ विधाय तद्धर्म्महरं स
कर्म्म नृपो मनस्तापमवाप कामम् । पापं विवेकी न करोति जातु कृत्वानुतापं परमं प्रयाति ॥ १५ ॥ अब्रह्मतश्छेदन-
मिन्द्रियस्य नपुंसकत्वं बहुजन्मसु स्यात् । ततो विवेकी निजदारतुष्टो भूयाद्ध्रुवं चापरदारवर्जी ॥ १६ ॥ प्रायः परस्त्री-
गमनात्परत्र घोरे गतिः स्यान्नरके नराणाम् । यदन्त्यजस्त्रीगमनात्पुनः स्याद्वक्तुं न शक्नोति तदीश्वरोऽपि ॥ १७ ॥ अहो !
मयाऽकारि विकारभाजा तद्दुष्कृतं धर्मपराङ्मुखेन । तीर्थै तपोभिर्बहुभिर्न दानैः शुद्धिर्विधातुं किल यस्य शक्या ॥ १८ ॥
जनङ्गमीसङ्गमलीमसं स्वं जुहोमि देहं तदहं चिताग्नौ । कुसङ्गदोषाशुचि वह्निरेव पात्रं पवित्रीकुरुतेऽत्र धात्र्याम् ॥ १९ ॥
संशोचते भूरि तदेति राज्ञे तद्दुष्कृतं जीवितनिस्पृहाय । विज्ञातवृत्तः सचिवः प्रपञ्चं व्यजिज्ञपत्तं स्वकृतं समेत्य ॥ २० ॥
नृपः स गाढानुशयान्न मेने वचस्तदा तथ्यगिरोऽपि तस्य । स्वयं तु गत्वा निजगेहिनीं तां पप्रच्छ सन्देहविनाशनाय ॥ २१ ॥
मुद्रेक्षणात्तद्वचनाच्च तथ्यममन्यतासौ सचिवप्रपञ्चम् । त्रातारमेनोनिचयात्तथैनं प्रशंसयामास मुहुर्मुहुः सः ॥ २२ ॥
अथो रजन्या प्रहरे तुरीये श्रीमीणला साप्तसमाधिनिद्रा । स्वप्ने स्वतेजोर्जितवैरिपक्षं ददर्श सिंहं स्वमुखे विशन्तम्

॥ २३ ॥ न्यवेदयद्भूपतये प्रसोदात् स्वप्नं तमेषोल्लसिताननश्रीः । दध्रे च गर्भं निजभर्तृयोगात्समौक्तिकं शुक्तिरिवाप्तभोगा ॥ २४ ॥ बभार गर्भातिशयादुदभ्रान् सा दोहदान् द्रोहकरानरीणाम् । पूर्णेऽथ काले सुषुवे तनूजं चिन्तामणिं रोहणभूमिकेव ॥ २५ ॥ विधाय संप्रीणितसर्वलोकं जन्मोत्सवं तस्य निरस्तशोकम् । ददौ मुदा श्रीजयसिंहदेवेत्याख्यां नृपः स्वप्नसमां स तस्मै ॥ २६ ॥ स लाल्यमानो ललनाभिरासीदष्टाब्दिको भूपसुतः क्रमेण । नृपासनेऽसौ विचरन् सदन्तरुपाविशच्चान्यदिने निजेच्छम् ॥ २७ ॥ स्वविष्टरे शिष्टदिने निविष्टं दृष्ट्वा तमिष्टं नृपतिः प्रहृष्टः । पट्टाभिषेकं स्वविशेषविज्ञश्चक्रेऽतिशक्रस्य महेन तस्य ॥ २८ ॥ स्यातामुभौ नैकपुरे नरेशौ कोशे यथाऽसी विपिने हरी च । चित्ते विचार्यैति नृपः स आशापल्लीमगात्तत्र विमुच्य पुत्रम् ॥ २९ ॥ कर्णावतीति प्रथिताऽभवत्सा ततः पुरी कर्णनरेशनाम्ना । ख्यातिं परामुत्तमसङ्गमेन प्राप्नोति को न क्षितिमण्डलेऽस्मिन् ॥ ३० ॥ स मालवं जेतुमना महीशो ममार दैवादथ शीघ्रमेव । विश्वेऽपि विश्वे सति दैववश्ये कः कर्तुमीष्टेऽखिलचिन्तितार्थम् ॥ ३१ ॥ कृत्वा पितुः कृत्यमकृत्यभीरुः सुमेरुधीरो जयसिंहदेवः । स्वामात्यविन्यस्तसमस्तचिन्तः स पालयामास जनान्नयेन ॥ ३२ ॥ बालोऽप्यसौ मालवभूमिपालमियेष लेखेशसमो विजेतुम् । अहो ! सहन्ते नहि सत्त्ववन्तो महान्तमप्यत्र पितुर्द्विषं तम् ॥ ३३ ॥ श्रीआलिगाख्यं सचिवं विमुच्य स्वदेशरक्षार्थमसौ कृतार्थः । नृपो विशालेन बलेन साकं स मालवं कालसमो जगाम ॥ ३४ ॥ कृत्वा विग्रहमुग्रमाग्रहवशाज्जग्राह धारां धराधीशो द्वादशवत्सरैर्बहुतरं विभ्रच्चिरं मत्सरम् । आलोक्यातुलविक्रमं बहुबलं श्रीगूर्जरेशं पुनर्नष्ट्वा मालवपालकः स समयाभिज्ञोऽभजन्मण्डपम् ॥ ३५ ॥ अथ निजमभिमानं मालवेन्द्रः स हित्वा क्रमयुगमनमच्छ्रीसिद्धराज्ञः

समेत्य । शरणमिह महान्तो दूमितानां महद्भिर्धरणिनिपतितानां भूमिरेवावलम्बः ॥ ३६ ॥ प्रादाद्राज्यं प्रणतजनतावत्सलः सिद्धराजस्तस्मै श्रीमानुचितचतुरो मुक्तगर्वाय सर्वम् । वीरा वैरिष्वपि विरचयन्त्यानतेषु प्रसादं स्थानं नादात्किमु जलनिधिः स्वारये केशवाय ॥ ३७ ॥ कर्णाटलाटमगधाङ्गकलिङ्गवङ्गकाश्मीरकीरमरुमालवसिन्धुमुख्यान् । देशान् विजित्य तरणिप्रमितैः स वर्षैः सिद्धाधिपो निजपुरं पुनरासाद ॥ ३८ ॥ इति जितनिखिलाशः सर्वसम्पूरिताशः कृतसुकृतविकाशः शत्रुकेतुप्रकाशः । कलितसकलदेशः सोत्सवं गुर्जरेशः स्वपुरमथनरेशः स्वर्गतुल्यं विवेश ॥ ३९ ॥

॥ इति श्रीकुमारपालचरिते प्रथमसर्गे द्वितीयोवर्गः ॥ २ ॥



अथ श्रीपूर्णतल्लाख्यगच्छस्वच्छेन्दुसुन्दराः । सूरयो देवचन्द्राह्वा दध्युरेवं हृदि स्वयं ॥ १ ॥ पादलिप्तवप्पभट्टिवज्रार्यखपटादयः । प्रभावकाः पुराभूवन् सूरयो दूरितारयः ॥ २ ॥ आचार्या बहवः सन्तीदानीमप्यस्मदादयः । न तेषु तादृशः कोऽपि शासनोन्नतिकारकः ॥ ३ ॥ उपद्रवन्त्यहो जैनान् भृशं मिथ्यादृशोऽधुना । धिगस्मानश्मसङ्काशान् येषु सत्सु समत्सराः ॥ ४ ॥ ध्यात्वेति सूरिमन्त्रस्याराधनं सूरयो व्यधुः । विधुतान्यप्रभावस्य शासनोन्नतिहेतवे ॥ ५ ॥ प्रत्यक्षीभूय तत्पीठपूजिता शासनेश्वरी । मुमुक्षुमुख्यमाचष्ट स्पष्टवागिति तं मुदा ॥ ६ ॥ धन्धुकनगरे युष्मान् देववन्दनतत्परान् । यो निपद्य निपद्यायां बालो वन्दिष्यतेतराम् ॥ ७ ॥ मोढवंशावतंसाभः पाहिणीचाचिगाङ्गभूः । चाङ्गदेवाह्वयो भावी साम्प्रतं स प्रभावकः ॥ ८ ॥ इत्यादिश्य प्रभून् प्रीता देवता सा तिरोऽभवत् । नगरं ते च धन्धुकं ययुस्तत्कार्यसि-

द्धये ॥ ९ ॥ पञ्चशक्रस्तवैर्देवान् वन्दन्ते यावदेव ते । करलग्नसुता तावदेका श्राद्धी समागमत् ॥ १० ॥ नत्वा नुत्वा च
सा देवान् ववन्दे यतिसत्तमम् । विधिवत्कुशलोदन्तमपृच्छत्स्वच्छमानसा ॥ ११ ॥ उपविश्य निपद्यायां सुतोऽपि जन-
नीगिरा । स भालस्पृष्टभूपीठोऽनमत्तं पञ्चवार्षिकः ॥ १२ ॥ सोऽयमेवेति निश्चित्य मुदिताः सूरयोऽप्यदुः । धर्म्मलाभा-
शिषं तस्मै पृष्ठस्पर्शनपूर्वकम् ॥ १३ ॥ सर्वलक्षणसम्पूर्णं सर्वावयवसुन्दरम् । तमालपन् चिरं बालं तेऽतिकोमलया गिरा
॥ १४ ॥ ततस्ते मुदिता बाढमाश्रमं द्राक् स्वमाश्रयन् । चित्तोत्साहो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् ॥ १५ ॥ वास-
रेऽथ द्वितीयेऽस्मिन् । स्वयं सङ्घपरीवृताः । पाहिणीसदनं प्रापुः सूरयो दूरितांहसः ॥ १६ ॥ धन्यंमन्या प्रभून् सापि
सच्चकारासनादिभिः । मुह्यन्ति स्वागताचारे न कदापि विवेकिनः ॥ १७ ॥ चाङ्गदेवस्तदागत्य गुरोरङ्कमभूषयत् । भव-
न्ति भाविभावानां बालचेष्टा हि सूचकाः ॥ १८ ॥ प्रणम्य पाहिणी सूरीनिति भक्त्या व्यजिज्ञपत् । भवदागमनादद्य
पवित्रमभवद्गृहम् ॥ १९ ॥ मिथ्यादृगपि भगवन् ! पतिर्नास्ति पुरेऽधुना । आवर्ज्जयति यः सङ्घं भाग्यात्प्राप्तं स्वमन्दिरे
॥ २० ॥ आदिश्यतां तथाप्येतन्निजागमनकारणम् । यथा विधाय तत्कुर्वे गुरोः स्वं सफलं जनुः ॥ ११ ॥ रञ्जितास्त-
द्वचोभिस्तेऽवदन्निति शुभे ! शृणु । समस्तवनितारत्नं जानामि भवतीं किल ॥ २२ ॥ त्रिजगत्तिलकः श्रीमांश्चक्रिलक्षण-
लाञ्छितः । यस्याः कुक्षावयं जातः सुतो वंशविभूषणम् ॥ २३ ॥ अमीभिर्लक्षणैः प्राज्यं राज्यं राजकुले भवेत् । वणिग्ब्रा-
ह्मणयोर्वंशे जातः स्यान्मन्त्रिपुङ्गवः[1] ॥ २४ ॥ अथ चेद्व्रतमादत्ते भाग्येन भवदङ्गजः । तदायं कलिकालेऽपि प्रथमं युगमा-

१ "मुनिपुङ्गवः" इत्यपि पाठः ॥

नयेत् ॥ २५ ॥ तदस्मभ्यममुं देहि तनयं तत्त्वकोविदे ! । धन्यानामेव जायन्ते जाताश्चारित्रधारिणः ॥ २६ ॥ इत्याद्यु-
क्तापि गुरुभिः पत्यादेशं विना सती । किं करोमीति चतुरा चिन्तयामास चेतसि ॥ २७ ॥ सुतं दत्त्वाधुना भद्रे ! निज-
दोषं निराकुरु । श्राद्धोऽभ्यधात्परः पश्चात्प्रमाणं वचनं पितुः ॥ २८ ॥ तथेति प्रतिपद्याह पाहिणी तनयं रयात् ।
वत्स ! स्वच्छमतेऽमीषां भवान् शिष्यो भविष्यति ? ॥ २९ ॥ ओमित्युक्तेऽथ तेनापि सादात्तेभ्यः सुतं मुदा । उल्लङ्घयन्ति
तत्त्वज्ञा गुरुवाक्यं न कर्हिचित् ॥ ३० ॥ ते चाङ्गदेवमादाय ययुः कर्णावतीमथ । चाचिगः सुचिराद्गेहं कृतार्थो निजमा-
गमत् ॥ ३१ ॥ प्रातिवेश्मिकतो ज्ञात्वा वृत्तान्तं तं विखिन्नधीः । सुतस्नेहातुरः पत्नीं प्रीतिवानप्यतर्जयत् ॥ ३२ ॥ त्यक्त-
पानाशनः पुत्रदर्शनावधि वेगतः । कर्णावतीमगादेष क्रोधरुद्धाशयो भृशम् ॥ ३३ ॥ क्रोधधूमध्वजस्तस्य ज्वलन्नतितरा-
मपि । गुरुवाक्यामृतैः सिक्तो निर्ववौ तत्क्षणादपि ॥ ३४ ॥ श्रीमानुदयनो मन्त्री तं निनायात्ममन्दिरम् । तत्र खेलन्तमा-
लोक्य सुतं स मुमुदेतराम् ॥ ३५ ॥ समं सुतेन बुभुजे कृतदेवार्चनक्रियः । तुतोष च विवेकज्ञो निर्भरं राचिवादरात्
॥ ३६ ॥ द्रम्मलक्षत्रयं पञ्च दुकूलानि शुतद्वयम् । ततस्तत्पुरतो मुक्त्वा सचिवो वाक्यमब्रवीत् ॥ ३७ ॥ विद्धशात्मन
एवेदं विद्धि वित्तशुतादिकम् । तथाप्येतत्कृपां कृत्वा गृहाणानुगृहाण माम् ॥ ३८ ॥ देहि मे चाङ्गदेवाह्वं सुतं तावकमे-
तकम् । वाग्भटाम्रभटाख्यौ मे सुतावेतौ गृहाण च ॥ ३९ ॥ पुत्रवानस्ति धन्योऽस्ति भवानेव महीतले । समीहन्ते निरीहा
यत्सुतं श्रीगुरवोऽपि मे ॥ ४० ॥ इत्युक्तियुक्तिभिर्बाढं बोधितो मंन्त्रिणापि सः । नादात्स्वतनयं तस्मै पुत्रस्नेहो हि दुस्त्य-
जः ॥ ४१ ॥ चाङ्गदेवं समादाय तमापृच्छ्य च मंन्त्रिणम् । चचालासौ पुरस्तावच्चक्षुवे केनचित्स्फुटम् ॥ ४२ ॥ ततः

स चिन्तयामास खिन्नास्यो निजमानसे । अमीभिः शकुनैर्मन्दैः स्याद्दुःखं मरणावधि ॥ ४३ ॥ कदाचिन्मन्दभाग्येन सुतोऽयं म्रियतेऽध्वनि । द्वयोरपि भवेन्मृत्युर्वा समं व्रजतोः पथि ॥ ४४ ॥ तदमुं मन्त्रिणे दत्त्वा व्रजामि निजमन्दिरम् । भूयोऽपि भावि मेऽमुष्य दर्शनं जीवतः सतः ॥ ४५ ॥ व्यावृत्य स विचिन्त्येति तमदान्मन्त्रिणे मुदा । कुर्वन्ति नहि शास्त्रज्ञाः कार्यं शकुनवारितम् ॥ ४६ ॥ ततः प्रमुदितो मन्त्री गाढालिङ्गनपूर्वकम् । अवादीदुचितज्ञस्तं प्रशंसन् साधु साध्विति ॥ ४७ ॥ सखे ! मह्यं वितीर्णोऽसावनर्घ्योऽपि सुतस्तव । अपमानपदं भावी योगिमर्कटवन्नमन् ॥ ४८ ॥ गुरुभिः पुनरासोऽसौ ग्राहितः सकलाः कलाः । रत्नं वैकटिकेनेव नेष्यतेऽनर्घ्यतापदम् ॥ ४९ ॥ गुरुभ्योऽथार्पयत्पुत्रं मन्त्रिणैवं स वोधितः । आनीय पाहिणीं चक्रे तत्र दीक्षोत्सवं परम् ॥ ५० ॥ गुरवश्चक्रिरे तस्य प्रशस्यगुणशालिनः । सोमचन्द्र इति ख्यातं नाम कामोपमाकृतेः ॥ ५१ ॥ वरिवस्यां गुरोस्तन्वंश्चिन्वन् पुण्यकणोत्करान् । क्रमेण सकलं शास्त्रं स जग्राहोग्रधीनिधिः ॥ ५२ ॥ प्राप पारमपारस्य वाङ्मयाब्धेः स निःश्रमम् । अंशुमान् गगनस्येव सम्पदामिव चक्रभृत् ॥ ५३ ॥ लघुरनुगुरुसंयोगं यद्गुरुतामावभार तद्युक्तम् । तत्याज नार्जवं यत्र वक्रतामार तच्चित्रम् ॥ ५४ ॥ धिया कुशाग्रोपमयैकयैव पपावपारं किल वाङ्मयाब्धिम् । पिबन् समुद्रं चुलुकैरगस्तिस्त्रिभिस्तु तैस्तत्सदृशः कथं स्यात् ॥ ५५ ॥ संसिद्धकार्या अथ सूरिवर्याः सङ्घाग्रहात्पत्तनमापुरार्याः । चक्रे प्रवेशोत्सवमत्युदारं तदा मुदा सङ्घजनोऽपि सारम् ॥ ५६ ॥ सूर्यागमेनाप मुदं समग्रो लोकस्तदा कोक इवोत्तमाग्र्यः । धर्मोन्नतिं तत्र परां वितेने जनुः कृतार्थं स्वमलं च मेने ॥ ५७ ॥ समागतं दिग्विजयं विधाय वर्षैस्तदा द्वादशभिर्महीशम् । समानमन् सर्वजनाः समेत्य स्वस्वोचितं प्राभृतकं प्रदाय ॥ ५८ ॥

तस्मै ददुर्दर्शनिनः समग्रा धर्म्माशिषं वेगवशादुपेत्य। अनागतान् जैनमुनीन् विभाव्य धर्म्मद्विषान्येन तदेत्यवादि ॥ ५९ ॥ जैना विदीनस्मयराजमाना नायान्ति राजन्निह राजगेहम्। निन्दन्ति धर्मादपराञ्चितान्तं वदन्ति कान्तं निजमेव धर्मम् ॥ ६० ॥ न्यवेदयन् मन्त्रिवरः स्वरूपं श्रीदेवचन्द्राभिधसूरये तत्। प्रस्तावविज्ञो गुरुचक्रवर्त्ती जगाद तं नाशितसज्जनार्त्तिः ॥ ६१ ॥ सदा सदाचारविचारदक्षा न साधवो राजगृहं व्रजन्ति। निरीहचित्ता निजकृत्यवित्ता रङ्कं नरेशं च समं विदन्ति ॥ ६२ ॥ तथापि च श्राद्धसमाधिहेतोः सर्वे वयं सम्प्रति राजगेहम्। यास्याम आचार्यवरा मिलित्वा स्वधर्म्मकार्येण नयैकदेहम् ॥ ६३ ॥ सङ्गत्य सर्वेऽप्यथ सूरिवर्या ययुर्नृपद्वारि विचारिधुर्याः। धर्माशिषं दास्यति कोऽत्र राज्ञे विचारयामासुरिदं मिथश्च ॥ ६४ ॥ तदा दशाब्दोऽपि निरस्तशङ्कः स सोमचन्द्रो मुनिराह हर्षात्। श्रीसिद्धभूपालपुरो निवेद्यं मया वचस्तत्समयानुरूपम् ॥ ६५ ॥ तथेति सर्वे प्रतिपद्य हृद्यां ते संसदं सूरिवरा अवापन्। श्रीमत्क्षितीशाय विहाय शङ्कां सोऽदात्तदाशीःपदमित्युदारम् ॥ ६६ ॥ जीव जीवसम! विद्यया सदा नन्द नन्दनसमान! समान! । नन्द नन्दसम! दाननिरस्तकर्ण! कर्णसुत! सिद्धनरेन्द्र! ॥ ६७ ॥ अस्ति वः सुखमखण्डितमङ्ग ते विनेयनिवहाः सुखभाजः। आस्यतां किमजनिष्ट विलम्बः स प्रणाममिति भूपतिराख्यत् ॥ ६८ ॥ वासरत्रयमियाय गतानां राजकार्यवशतोऽत्र यतीनाम्। तद्विधाय वयमुत्सुकचित्ता आगता स्म इति तं मुनिरूचे ॥ ६९ ॥ किं नृपे तदिति पृच्छति सोऽवक् त्वत्प्रवेशमहमत्र विधातुम्। कामधेनुजलधीन्दुदिशेभामन्त्रणं त्विति विधाय समेताः ॥ ७० ॥ भूमिं कामगवि! स्वगोमयरसैरासिञ्च रत्नाकराः! मुक्तास्वस्तिकमातनुध्वमुडुप! त्वं पूर्णकुम्भीभव। छित्वा कल्पतरोर्दलानि सरलैर्दिग्वारणास्तोरणान्या-

धत्त स्वकैर्विजित्य जगतीं नत्वेति सिद्धाधिपः ॥ ७१ ॥ तदित्युदारं वचनं निशम्य चमत्कृतो भूपतिरात्मचित्ते । अहोऽद्भुता बुद्धिरहोऽनवद्या विद्येति धून्वन् स्वशिरः शशंस ॥ ७२ ॥ नीत्वा तमङ्कं स्वपटेन हृष्टः स न्युञ्छनं भूमिपतिश्चकार । अहं करिष्येऽस्य पदाधिरोपमहोत्सवं चेति गुरून् ययाचे ॥ ७३ ॥ नानाचारविचारचारुरचनाप्रीतेन तेनाथ तेऽनुज्ञाता वसतिं महेन महता स्वां स्वामवापुः क्षणात् । आश्चर्यातिशयं दधार हृदये राजा द्विजौघः क्रुधं हर्षं सज्जनो गुरुर्गुरुगुणं शिष्यस्य चानुक्रमम् ॥ ७४ ॥

॥ इति श्रीकुमारपालचरिते प्रथमसर्गे तृतीयो वर्गः ॥ ३ ॥

अथो स सोमाख्यवणिग्वरस्य गृहं गतर्द्धेः सुकृतप्रियस्य । सार्द्धं गुणज्ञेन गणीश्वरेणाऽगात्सोमचन्द्रो विहरन् कदाचित् ॥ १ ॥ अङ्गारपूर्णः पृथुताम्रकुम्भो विनिर्गतः श्रेष्ठिगृहे तदास्ति । क्षिप्त्वाङ्गणेऽङ्गारभरं च निन्ये स वित्तलोभाद्द्विधनेन तेन ॥ २ ॥ शुद्धान्नपानं स गणिस्तदर्थे जग्राह बह्वाग्रहमागमज्ञः । तस्याङ्गणे हेमगणं निरीक्ष्याख्यत्सोमचन्द्रो मुनिचन्द्रमेवम् ॥ ३ ॥ तादृग् न भोगो न च दानयोगो निरीक्ष्यते गेहमिदं न तादृग् । अहो ! गरीयोऽत्र गृहाजिरस्थं विलोक्यते वित्तमिदं तु यादृग् ॥४॥ एते न भुञ्जन्ति मितंपचत्वादेतत्तु चौरा न हरन्ति कस्मात् । तुषौघवत्कोऽपि न वित्तजातं नरो जहातीह बहिः प्रदेशे ॥ ५ ॥ तस्येदमाकर्ण्य वचः सकर्णो वणिग्वरश्चेति चकार चर्चाम् । निरीक्षितं वित्तमनेन नूनं ममाङ्गणेऽभाग्यवतोऽप्यनूनम् ॥ ६ ॥ इति विचिन्त्य जगाद मृदुस्वरं किमिह जल्पसि साधुक ! कल्पितम् । अथ

यदस्ति धनं धनमत्र चेत्तदिह दर्शय दर्शनिसत्तम ! ॥ ७ ॥ अदर्शयत्तत्स्वकरेण साधुस्तथापि नापश्यदयं विभाग्यः । गृहाजिरस्थान्यपि नो धनानि पश्यन्ति भाग्यै रहिता मनुष्याः ॥ ८ ॥ प्रत्यक्षतामेति धनं यदीदं तत्कारयाम्यस्य पदाधिरोपम् । भाग्योज्झितं स्वं स विभाव्य धन्यः श्रेष्ठीति चित्ते नियमं चकार ॥ ९ ॥ तज्जातरूपं स्फुटजातरूपमालोकयच्छ्रेष्ठिवरस्ततः सः । विलोकनाद्भाग्यवतां भवन्ति सर्वर्द्धयोऽत्र प्रकटाः क्षणेन ॥ १० ॥ निशम्य वृत्तान्तममुं जहर्ष सूरीश्वरः श्रेष्ठिमुखेन बाढम् । निरीक्ष्य शिष्यातिशयं लभेत गुरुः प्रमोदं परमं न कोऽत्र ॥ ११ ॥ अभ्यर्थ्य सूरीनथ तस्य वर्षे चतुर्दशे हर्षितचित्तवृत्तिः । श्रीसिद्धराजो रचयाञ्चकार पदाधिरोपोत्सवमत्युदारम् ॥ १२ ॥ स्वर्लोकतां पत्तनमाससाद यच्छ्रीदतां सिद्धनृपः स तत्र । श्रीहेमचन्द्रो गुरुतां जनौघः सुपर्वतां तन्नहि चित्रमत्र ॥ १३ ॥ यद्विलोकनवशादुपागतोऽङ्गारभार इह चारुहेमताम् । हेमचन्द्र इति नाम निर्ममे निर्ममेण गुरुणा तदा मुदा ॥ १४ ॥ महोत्सवे तत्र सुवर्णलक्षं व्ययेऽकरोत्सिद्धनृपस्तदानीम् । चक्रे कृतार्थं च निजार्थसार्थं सोमाभिधानः स धनिप्रधानः ॥ १५ ॥ अथैकदा प्राप्य गुरोर्निदेशं काश्मीरदेशं प्रति हेमचन्द्रः । चचाल सूरीश्वरवृन्दधुर्यः श्रीसारदाराधनबुद्धिवर्यः ॥ १६ ॥ गत्वा प्रयाणत्रितयं मुनीशः सोऽस्थात्क्वचिद्देवकुलेऽथ शून्ये । घने निशीथे च विहाय निद्रां सस्मार मन्त्रं हृदि सारदायाः ॥ १७ ॥ वाग्देवता तत्र तदीयभाग्याकृष्टेव दृष्टेर्मुदमादधाना । आविर्बभूवाशु वशीकृतेव पुण्यैरगण्यैर्गणनायकस्य ॥ १८ ॥ चञ्चत्काञ्चनकुण्डलद्युतिभरैरापूरयन्ती दिशः सर्वाश्चन्द्रकलोज्ज्वला हरिहरब्रह्मादिभिः संस्तुता । ब्राह्मी ब्रह्मकपाटपाटनपटुर्जाड्यौघविध्वंसनी तन्वाना दशनप्रभाभिरवदत्सर्वान्धकारक्षयम् ॥ १९ ॥ अहं तवाराधनतुष्टचित्ता समीपमासेह

निरीहवर्य ! । विहाय सद्ध्यानभरं वरं त्वं वृणीष्व मायासमिमं कुरुष्व ॥ २० ॥ नानाविज्ञानरूपः शुचिरुचिरवचोरञ्जिता-नेकभूपः सद्विद्यायज्ञयूपो भवभवभयभित्पुण्यपानीयकूपः । आजन्मब्रह्मलीलाकलितकलतनो ! संस्मृता त्वत्समीपमेपैष्या-मीत्युदित्वा सपदि भगवती भारती सा तिरोऽभूत् ॥ २१ ॥ प्रातर्वलित्वा स जगाम वेगात् स्थानं गुरूणां गुरुसिद्धकार्यः । किमेतदित्युत्कलिकाकुलेन निरीक्ष्यमाणो गुरुणा गुणज्ञः ॥ २२ ॥ मुक्ताशुक्तिकमुद्रया गुरुपुरः स्थित्वा च कृत्वा नतिं नानाबन्धसुबन्धुरध्वनिभरं स्तोत्रं चकार प्रभोः । नव्यं काव्यशतेन तेन गुरवोऽप्यानन्दिता निर्भरं प्रोचुर्वञ्चितचित्तजं तमिति ते शिष्यं स्वशिक्षाक्षमम् ॥ २३ ॥ वत्स ! चारुरचनावचनानामातनोति तव नो हृदि मोदम् । किन्त्वलीकलव-तोऽपि मरीचिर्दुस्सहं कमपि तापमवाप ॥ २४ ॥ यद्वदस्यनुदिनं निजविद्यागर्वितोऽत्र वितथानि वचांसि । तैर्ध्रुवं परभवे तव दुःखं सम्भविष्यति चरित्रजुषोऽपि ॥ २५ ॥ इमां समाकर्ण्य गुरोः स शिक्षां दक्षस्तदन्ते नियमं चकार । अतः परं श्रीजिनवाग्विरुद्धं कार्यं कवित्वं च मया न कार्यं ॥ २६ ॥ विज्ञाय शिष्यं चरणैकदक्षं नृपप्रमोदाय विमुच्य तत्र । श्रीदे-वचन्द्राभिधसूरयस्ते चक्रुर्विहारं सुविहारनत्यै ॥ २७ ॥ श्रुत्वा पुराणानि पुराणराज्ञां श्रीकर्णसूः सोऽन्यदिने निदध्यौ । धन्या इमेऽद्यापि यशो यदीयं प्रवर्त्तते शास्त्रनिबद्धमुच्चैः ॥ २८ ॥ ततः समभ्यर्थ्य स हेमचन्द्रसूरीन् श्रुतेशावरराजमानान् । श्रीसिद्धहेमाभिधशब्दशास्त्रमचीकरत्सिद्धनृपः स्वकीर्त्यै ॥ २९ ॥ विधाय पूर्णं गुरुशब्दशास्त्रं समार्प्पयंस्ते मुदिता नृपस्य । आकार्य सर्वान् विदुषः सहर्षं सोऽदर्शयद्बुद्धिनिधिर्नरेशः ॥ ३० ॥ सर्वोपधाशुद्धतमं तदा तद्विज्ञाय विज्ञाय नरेश्वराय । अनन्यसामान्यतमं समाख्युश्चमत्कृतास्ते ज्ञवराः समग्राः ॥ ३१ ॥ शुभे मुहूर्त्ते महता महेन दास्यामि सर्वेभ्य इदं सुधी-

भ्यः । ध्यात्वेति रत्ना निजकोशगर्भे तत्पुस्तकं भूमिपतिर्मुमोच ॥ ३२ ॥ नरेश ! नामापि न वर्त्तते ते शास्त्रेऽत्र चित्रे-
ऽपि गुरुप्रयोगैः । चक्रेऽमुनेदं निजकीर्त्तिहेतोरिदं पुरोधा निशि भूपगूने ॥ ३३ ॥ एवं चेतन्न्रसरात्प्रातरेतच्छारां
विद्वन् ! सर्वसाक्षं करिष्ये । देशत्यागं सूरये सार्द्धमन्यैर्दास्याम्येवं भूपतिः प्राह कोपात् ॥ ३४ ॥ रात्रौ मन्त्री सज्जनाख्यो
गुरुभ्यो वृत्तान्तं तं ज्ञापयामास सर्वम् । धार्या धीमद्भिः स्मृतिर्गोभि भव्यं तेऽवोचन् श्रीवीतरागप्रसादात् ॥ ३५ ॥ और्व-
राहुखलमारुतसंज्ञा वैरिणो जगति कारणहीनाः । अब्धिभानुगुजनाम्बुधराणां विघ्नवृन्दमनिशं जनयन्ति ॥ ३६ ॥ चिन्त-
यन्निति चिरं गुरुरुच्चैस्तन्निराकृतिकृते स कृतज्ञः । दुःखवृक्षगहने दहनाभां शारदां स्मरदां हृदि दध्यौ ॥ ३७ ॥ तावत्स-
मागत्य जवेन भारतीत्युवाच नाप्यंयमवर्थमेनम् । विमुञ्च सादं भज सुप्रसादं प्रभो ! विषादं वितथं कृथा मा ॥ ३८ ॥
अनुज्ञया सूरिवरस्य गत्वा लेखेश्वरी तत्र तदा लिलेख । चौलुक्यभूपालकुलप्रशस्तिं द्वात्रिंशता शस्ततरैः कवित्वैः ॥ ३९ ॥
प्रातः कृत्वावश्यकं सूरिवर्या यावत्स्वस्थाः सूरिमन्त्रं स्मरन्ति । तावद्भूपप्रेषितः कोऽपि दूतो नत्वा तस्यामन्त्रणं प्रत्युवाच
॥ ४० ॥ धिग् विप्रान्मुनिनिन्दकान् जडधियो निष्कारणं वैरिणो हाहा ! किं भवितेति लोकनिवहे तारस्वरं जल्पति । सूरीशा
नृपसंसदं द्विजनरैर्व्याप्तामवापुः क्षणादासामासिर आशु पूर्णनादिगे श्रीसिद्धराजा नताः ॥ ४१ ॥ स्मित्वोवाच नराधिपो
यतिपते ! किं नास्ति मद्वर्णनं ग्रन्थेऽस्मिन्निति सूरयो निजगदुः कस्मादिदं पृच्छ्यते । आदाय स्वयमेव पश्यतु भवान्
भ्रान्तिं वृथा मा कृथा विद्वो दुर्जनवाक्शरैरतितरां किं चेतनां प्रोज्झसि ॥ ४२ ॥ विलोक्य काव्यानि स कोमलानि
स्वश्लोककारीणि तदेत्यवोचत् । प्रधानतारी कलिपापहारी त्वं वा महेशोऽसि मुनीश ! लोके ॥ ४३ ॥ रे द्विजिह्व ! वद

रे पदहीन ! किं वृथा निजवचोविषभारैः । लम्भितोऽसि विकृतिं भवतेति निग्रमाह भज धीजड ! दूरम् ॥ ४४ ॥ निर्वासितोऽगाज्जडधीः स दूरं पूरं च हर्षस्य बभार सूरिः । श्रीभूपकोपप्रशमाय कश्चिज्जगाद विप्रः सदसीति वाक्यम् ॥ ४५ ॥ भ्रातः पाणिनि ! संवृणु प्रलपितं कातन्त्रकन्था वृथा। कष्टं भो ! कटुशाकटायनवचः क्षुद्रेण चान्द्रेण किम् । किं कण्ठाभरणादिभिर्बठरयस्यात्मानमन्यैरपि श्रूयन्ते यदि तावदर्थमधुराः श्रीसिद्धहेमोक्तयः ॥४६॥ रुष्टस्तदा तन्नृपतिर्द्विजेभ्यो नादाज्जडेभ्यो वरशब्दशास्त्रम् । सदानमानं यतिसत्तमेभ्यः समर्प्पयामास शुभे मुहूर्त्ते ॥ ४७ ॥ ततः समुत्थाय ययुः क्षयं ते द्विधापि विप्रा नृपतिप्रकोपात् । स्वमालयं प्रापुरपापचित्ता द्विधापि ते श्रीव्रतिनामधीशाः ॥ ४८ ॥ सिद्धान्ते सिद्धबुद्धिर्धृतधृतिरनिशं कर्कशे तर्कवादे छन्दोवृन्देऽनवद्यः कुशनिशितमतिः सारसाहित्यशास्त्रे । दक्षः सल्लक्षणौघे स्फुटपटुवचनो नाटके पादिताघः श्रीमान् श्रीहेमचन्द्रो जगति विजयते वादिवृक्षौघदावः ॥ ४९ ॥ दिवमिव सुरराजो धिष्ण्यराजो यथाभ्रं वनमिव मृगराजः साधुवत्सर्वजीवान् । सकलमवनिपीठं पालयन् सिद्धराजो नयविनयविवेकैश्चारुराज्यं वितेने ॥५०॥

॥ इति श्रीकुमारपालचरिते प्रथमसर्गे चतुर्थो वर्गः ॥ ४ ॥

---

जयसिंहोऽथ भूपालो गुरुसिंहपराक्रमः । अनैषीत्स बहुं कालं पालयन्निखिलामिलाम् ॥ १ ॥ विवेद सकला विद्याः कला द्वासप्ततिं तथा । द्वात्रिंशल्लक्षणान्युच्चैः षट्त्रिंशदायुधानि च ॥ २ ॥ संसिद्धसर्वविज्ञानः सिद्धमन्त्रचयः स्वयम् । सिद्धराज इति ख्यातिं स सिद्धामाप भूतले ॥ ३ ॥ दण्डमण्डितसद्धस्ते शङ्खकुण्डलशोभिते । भस्मोद्धूलितसर्वाङ्गौ जटा-

जूटविराजिते ॥ ४ ॥ अथैकदा पुरे तत्र योगिन्यौ द्वे समीयतुः । निरीक्ष्यमाणे लोकेन विस्मयोत्फुल्लचक्षुषा ॥ ५ ॥ युग्मम् ॥ पश्यन्त्यौ पत्तनं ते द्राग् जग्मतुर्नृपपर्षदम् । श्रीमत्सिद्धनरेशायाशिषं दत्त्वा च तस्थतुः ॥ ६ ॥ शृङ्गिके पूरियित्वाथ चूरयित्वाशु सम्भ्रमम् । चक्रतुः सर्व सभ्यानां विस्मयोत्तरलं मनः ॥ ७ ॥ कृतं कृत्येन केनाथ भवतीभ्यामिहागतम् । इदं मे महदाश्चर्यं नत्वेत्याख्यद्धराधवः ॥ ८ ॥ ज्येष्ठा जगाद श्रीकर्णसुताकर्णय कारणम् । निर्णयं कुरु वर्णेश ! तज्ज्ञात्वा शीघ्रमावयोः ॥ ९ ॥ विद्यते कामरूपाख्यः कामरूपजनास्पदम् । देशो न यत्र लेशोऽपि पाप्मनां क्वापि दृश्यते ॥ १० ॥ तत्र श्रीसिद्धनाथाख्यो यथार्थाख्योऽस्ति योगिराट् । शतायुः साधितानेकमन्त्रतन्त्रपवित्रधीः ॥ ११ ॥ मिथः सब्रह्मचारिण्यौ तच्छिष्यिण्याववेहि नौ । सिद्धिबुद्ध्यभिधासिद्धे योगिन्यौ राजसत्तम ! ॥ १२ ॥ सिद्धराज इति ख्यातं त्वन्नाम महिमाकरः । तत्रास्माभिः समश्रावि विश्राणितजगत्सुखम् ॥ १३ ॥ योऽस्ति दन्तैः सदा लोहं सिद्धः सोऽत्र निगद्यते । असद्गुरुं विना नौ वा तन्न वेत्ति परो भुवि ॥ १४ ॥ इत्युक्त्वा कटकं लोहमयं जग्ध्वा च ते बलात् । चक्राते विस्मयं राज्ञः सत्यप्रत्ययदर्शनात् ॥ १५ ॥ गुरोरादेशतो राजन्नावां तज्ज्ञातुमागते । मुञ्च ख्यातिमिमां नौ वा लक्षणं दर्शय स्वकम् ॥ १६ ॥ आकर्ण्य कर्णसूस्तस्या वचनं वाग्मिनां वरः । चिन्तयामास चित्तेन देयं प्रत्युत्तरं कथम् ॥ १७ ॥ मत्वा कालविलम्बेन सिद्धिं क्षोणीपतिः क्षणात् । विसृज्य संसदं ते च ययावन्तःपुरं स्वयम् ॥ १८ ॥ रहस्यं मन्त्रिणे प्रोच्य रात्रावुत्तरलिप्सया । कौक्षेयककरो राजा निर्ययौ तत्सखो गृहात् ॥ १९ ॥ सुप्तेषु सर्वलोकेष्वालोकयन् सकलं पुरम् । त्रिकचत्वररथ्यासु स बभ्राम भ्रमोज्झितः ॥ २० ॥ व्योमाङ्गणं तारकराजमानं पश्यन् पुरं शून्य-

मिव स्वकीयम् । चचाल चौलुक्यकुलावतंसः स आलिगाख्यं सचिवं समेत्य ॥ २१ ॥ बहुलनिशिनिशीथे शूचिभेद्येऽन्ध-
कारे निजचरणसरोजैः सञ्चलन् सर्वमार्गे धवलगृहसमूहानापणौघांश्च पश्यन् । करकृतकरवालः सोऽभ्रमत्तत्र द्रङ्गे ॥२२॥
क्वचिद्घूकाघोषान् क्वचिदपि शिवाफेत्कृतिरवान् क्वचिद्वेतालालीः क्वचिदपि चलद्भूतनिचयान् । क्वचित्क्रूराक्रन्दान् सुरत-
निरताः क्वापि कुलटाः। स पश्यन् शृण्वन्नो नृपतिरभजद्भीतिरभसम् ॥ २३ ॥ दृष्ट्वा पुरं सिद्ध इवैष पश्यन् केनाप्यदृष्टः
स चकार सत्यम् । स्वं सिद्धराजं गुरुसाधकौघैर्निरीक्ष्यमाणः क्वचिदेव यत्नात् ॥ २४ ॥ भ्रान्त्वा भ्रान्त्वा तत्र सर्वत्र
राजा सौधश्रेणीं शर्कराकारकाणाम् । प्रापत्तापव्यापहारी प्रजानामस्याश्च्छ्रुत्वा जम्पतीजल्पितं च ॥ २५ ॥ पत्नीं प्रोचे
रत्नसिंहाभिधानः प्रीत्या नित्यं शर्कराकृत्प्रधानः । अद्य प्रातर्योगिनीभ्यामुभाभ्यां रुद्धो बुद्ध्या पत्नि ! यत्नात् नृपो
नः ॥ २६ ॥ स्वामिन्नुपायः किमु नास्ति कश्चिद्विमुच्यते येन स सिद्धभूपः । सन्ति प्रपञ्चाः शतशः शुभाङ्गि ! ते बुद्धि-
गम्या न तु बालिशार्हाः ॥ २७ ॥ उपायमाख्याहि पते ! तमेनमिनो भवेद्येन गताधिबाधः । वृथा कृथा माग्रहमत्र मुग्धे !
रात्रौ न मन्त्रः क्रियते कथञ्चित् ॥ २८ ॥ श्रुत्वालापं तं तयोः प्रीतिबद्धं मत्वा सिद्धिं तत्र कृत्यस्य तस्य । गत्वा द्वारि
ज्ञापयामास तस्य वृत्तान्तं तं मन्त्रिणं प्रेष्य राजा ॥ २९ ॥ शुचिसचिववचोभिः प्राप्तमाकर्ण्य भूपं विततमतिरुदस्था-
द्विस्मयोत्फुल्लचक्षुः । नरपतिपदपद्मं स प्रणम्यासनं द्राक् तदनु घनधनौघं ढौकयामास राज्ञे॥ ३० ॥ अद्य देव ! सफलं मम
जन्म धन्यतां गृहमिदं च जगाम । राजराज ! निजपादसरोजैर्यत्पवित्रितमिदं भवतेश ! ॥ ३१ ॥ कथ्यतां स कतमोऽस्तु
पदार्थो यो धिनोति तव मानसमुच्चैः । अर्च्चयामि चरणौ तव येन सार्थतां मम नयामि च वित्तम् ॥ ३२ ॥ इति विनय-

विशिष्टैः तस्य वाक्यैः प्रमोदं कमपि परममुच्चैरासनं सोऽथ भेजे । निजचरितमशेषं सस्मितं विस्मिताय । स्वयमकथयदेवं शर्कराकारिणे तत् ॥ ३३ ॥ सिताकरोऽवोचदियान् मयाशश्रके कथं देव ! किलैतदर्थे । स्वल्पेषु कार्येषु महास्वरूपा नोपक्रमं यद्रचयन्ति भूपाः ॥ ३४ ॥ विधेहि मे बुद्धिनिधे ! समृद्धं यथा तथा कार्यमिदं विचार्य । निमज्जतामर्त्तिभरे नृपाणामालम्बनं मन्त्रिवरा भवन्ति ॥ ३५ ॥ इत्यर्थितोऽसौ बहुमानपूर्वमपूर्वबुद्धिप्रवरो नृपेण । व्यज्ञापयद्विज्ञवराय तस्मै कर्णेऽथ किञ्चिच्चिरमाविमृश्य ॥ ३६ ॥ ततोऽतिहृष्टो नृपतिस्तदैव स्वमन्दिरं सुन्दरधीरियाय । ददौ न सेवावसरं परेभ्यः स मन्त्रजापोरुमिषान्नरेभ्यः ॥ ३७ ॥ सिताकरोऽथादि नरेशदत्तमादाय सद्वस्तु ययावुदीचीम् । उल्लङ्घ्य मासेन घनं च मार्गं तस्थौ पुरे क्वापि वरेण्यबुद्धिः ॥ ३८ ॥ कङ्कलोहमयदण्डमण्डितं निर्ममे स सितया क्षुरीद्वयम् । यत्कथञ्चिदपि सारसारतो भिद्यते न गुरुभाविभासुरम् ॥ ३९ ॥ अतीत्य मासान् षडसौ क्रमेण प्रापत्पुनः पत्तनमुत्तमाग्र्यः । काश्मीरदेशाधिपतिप्रधानच्छलाद्बलौघेन विराजमानः ॥ ४० ॥ स पर्षदं हर्षवशादथैत्य श्रीसिद्धराजः समलञ्चकार । आगत्य वेगान्मुदितास्तदान्ये वितेनिरेऽस्मै क्षितिपाः प्रणामम् ॥ ४१ ॥ योगिन्यौ ते तुष्टचित्ते समेत्य दत्त्वा भूपायाशिषं तस्थतुर्द्राक् । कालक्षेपं सासहिर्नो गुरुर्नौ स्वस्थानं तत्प्रेषयेत्यूचतुश्च ॥ ४२ ॥ तावद्द्वास्थावेदितो रत्नसिंहो वृंहद्दम्भः संसदं प्राविशत्ताम् । अव्यग्रस्याढौकयद्भूरिवस्तून्यग्रे राज्ञः प्रौढबुद्धिः प्रमोदात् ॥ ४३ ॥ स्वर्णस्थालस्थापिते ते स दत्त्वा क्षुर्यौ हस्ते वेष्टिते सद्दुकूलैः । प्रोचे भूपं प्राणमन् दत्तशिक्षं पश्यत्स्वेवं सर्वसभ्येषु दक्षः ॥ ४४ ॥ अस्मत्स्वामी बालचन्द्राभिधानस्तत्राश्रौषीत्सिद्धराजाभिधां ते । तेन श्रीमंस्तत्परीक्षाकृते स एते तुभ्यं प्राहिणोत्कङ्कलोह्यौ ॥ ४५ ॥ सामान्यायो योऽस्ति

सिद्धः स एव भुङ्क्ते कङ्कं यः स सिद्धाधिराजः । जग्ध्वैते तत्प्रत्ययं दर्शय स्वं सत्यो राजंश्चेद्भवान् सिद्धराजः ॥ ४६ ॥ योगिन्यावप्येतदर्थे पुरैते एते स्तोऽत्रात्यन्तचित्रीयमाणे । अद्यैवैतज्जायतामुत्तरं वा मैवं भूपः संवदन्नाददे ते ॥ ४७ ॥ विद्युद्दीप्रे ते स्वहस्तस्थिते सोऽन्येषां दक्षो दर्शयामास तत्र । दृष्ट्वा पूर्वं तत्क्षुरीद्वन्द्वमिद्धं प्रापुः सर्वे विस्मयं स्मेरनेत्राः ॥ ४८ ॥ विषादहीनः स चखाद राजा क्षुरीयुगं पश्यति सर्वलोके । चण्डं पुनर्दण्डयुगं युगान्तकरं ददौ तत्र तयोस्तदा तत् ॥ ४९ ॥ ते विस्मिते ऊचतुरुच्चकीर्त्ते ! न जीर्यतेऽन्यस्य हि कङ्कलोहम् । हित्वा भवन्तं भुवि सिद्धराजं नरेन्द्रसद्योगसमृद्धिभाजम् ॥ ५० ॥ दृष्टा परीक्षा भवतः क्षमायां त्वं सिद्धराजोऽसि महीमहेन्द्र ! । स्वस्त्यस्तु ते देहि वचः स्वदेशं यास्याव आवां गुरुसन्निवेशम् ॥ ५१ ॥ इत्युक्त्वा ते भूभुजा भूरिवित्तसन्मानाद्यैः सत्कृते सत्कृतज्ञे । उल्लङ्घ्योर्वीं वीतशङ्के स्वदेशं दुर्गादेश्ये प्रापतुः स्तोककालात् ॥ ५२ ॥ छित्वा वंशान् भूभृतां सोऽथ भूरीनेकं छत्रं भूमिपीठे चकार । श्रीसिद्धेशो वर्ण्यते कूटशिल्पिकल्पोऽतः सोऽनल्पधीभिः कवीन्द्रैः ॥ ५३ ॥ एवं सिताकरकृतोत्तमबुद्धियोगात्तद्योगिनीद्वयमसावजयन्नरेशः । स स्वर्गनाथ इव जातसमीहितार्थं राज्यं चकार सुचिरं रुचिरं नयेन ॥ ५४ ॥ श्रीरत्नसिंहगुरुपादसरोरुहालिस्तेने कुमारचरितं ललितं यदेतत् । चारित्रसुन्दरकृतस्य जगाम तस्य सर्गो निसर्गविशदः प्रथमः समाप्तिम् ॥ ५५ ॥

इतिभट्टारकश्रीरत्नसिंहसूरिशिष्योपाध्यायश्रीचारित्रसुन्दरगणिविरचिते श्रीकुमारपाल-
चरिते महाकाव्ये वंशवर्णनो नामः प्रथमः सर्गः ॥ १ ॥ ग्रन्थाग्रं ३५० ॥

## ॥ अथ द्वितीयः सर्गः ॥

श्रीक्षेमराजनृपतेः सत्क्षेमविराजितस्य तस्याथ । देवप्रसादनामा कामाकारो भवत्पुत्रः ॥ १ ॥ तस्याभवत्तनूजस्त्रिभुवनपालाभिधः समृद्धश्रीः । वसुधापालनचतुरः स्वकुलनभोभास्कराकारः ॥ २ ॥ तस्य त्रयस्तनूजा आसन्निर्नाशितारिदर्प्पभराः । ते मूर्त्ता इव रेजुर्ब्रह्माच्युतशङ्कराः कुमराः ॥ ३ ॥ आद्यः कुमारपालः कमलाविमलाश्रयोऽसुहृत्कालः । अनुजोऽस्य महीपालाभिधोऽपरः कीर्त्तिपालश्च ॥ ४ ॥ नामलदेवी नाम्ना धाम्ना रम्भासमाऽभवत्पत्नी । पतिभक्तिनिरतचित्ता कुमारपालस्य सत्सतीवित्ता ॥ ५ ॥ भगिनी प्रेमलदेवी देवीव मनोहरा बभूवास्य । कृष्णभटेनोढूढा मोढेरेशेन या हर्षात् ॥ ६ ॥ श्रीमत्सिद्धनरेशः पुत्रविहीनः पवित्रचरितोऽपि । चिन्तितवानिति चित्ते स मन्यमानोऽकृतार्थं स्वम् ॥ ७ ॥ पटुतटिनीतटवृक्षः सचिवविहीनं च भूपते राज्यम् । पुत्रविहीनो वंशो भवन्ति नैते चिरायुष्काः ॥ ८ ॥ लालाविलमुखकमलाः बालाः खेलन्ति यत्र तत्र गृहे । तद्गृहमितरमरण्यं वदन्ति शून्यं सदा तज्ज्ञाः ॥ ९ ॥ जटिलं वसनविहीनं चटुलं बहुधूलीधूसरं पुत्रम् । पश्यन्ति पुण्यवन्तः शिवमिव निजकामचारपरम् ॥ १० ॥ राज्यं नाम च वंशः प्रभूतमत्र त्रयं विना पुत्रम् । मामनुनाशं यास्यति सर्वज्ञोऽहं कथं जातः ? ॥ ११ ॥ आराधयामि तदहं तनयनिमित्तं महेश्वरं देवम् । सन्तोषितोऽतिभक्त्या ददाति सर्वं यतः स्वामी ॥१२॥ ध्यायन्नित्थं सोऽगात्प्रभासतीर्थं स्वपादचारेण । विधिवच्छङ्करदेवं शङ्करमानर्च्च देवार्च्यम् ॥ १३ ॥ कर्पूरागुरुधूपैरभ्यर्च्य सुरार्च्चितं महादेवम् । नानाबन्धुरबन्धं स्तवनमकार्षीन्नृपः शम्भोः ॥ १४ ॥ जय मदनदहन ! नित्यं जय भवभवचारवारक ! स्वामिन् ! । नीलगल ! मङ्गलं ते पिनाकपाणे !

पिनाकेश ! ॥ १५ ॥ त्यक्तान्नपानकृत्यः शिवाग्रतः स्रस्तरं स निर्म्माय । कुशमयममायचित्तः सुष्वाप क्ष्मातले क्ष्मापः ॥ १६ ॥ ध्यायन्विकल्पहीनः शिवमव्यक्तं नृपो दिवानक्तम् । तुर्यदिनतमीमध्ये ददर्श शम्भुं यथारूपम् ॥ १७ ॥ तद्भक्तियुक्तितुष्टो महेश्वरोऽवोचदुच्चकैरेवम् । वद मदनसुन्दरतनो ! कस्मादाराधितो भवता ॥ १८ ॥ प्रणमन् पादौ भूपः स्तुतिपूर्वं व्याजहार हरमेवम् । शशिधर ! राज्यधरं मे देहि दयालो ! कृपां कृत्वा ॥ १९ ॥ अस्ति पुरा राज्यधरः कुमारपालोऽग्रजात्मजाज्जातः । तत्त्वं विमुञ्च चिन्तामित्युक्त्वान्तर्दधे देवः ॥ २० ॥ व्यर्थारम्भो भूपो दध्यावेवं तदा हृदा स्वेन । जीवति कुमारपाले नूनं पुत्रो न मे भावी ॥ २१ ॥ तस्मिन् हते हरो मे दास्यति पुत्रं पवित्रगुणकलितम् । ध्यायन्निति विविधतरं प्रापच्छ्रीपत्तनं वेगात् ॥ २२ ॥ तद्वधबुद्धिरथासौ जघान जनकं तदीयमात्मनरैः । तद्वंशं हन्तुमना घातकसङ्घं पुनः प्रैषीत् ॥ २३ ॥ श्रीमान् कुमारपालो दुष्टं रुष्टं च भूपतिं मत्वा । तत्याज जन्मभूमिं दधिस्थलीं समयविदुरोऽसौ ॥ २४ ॥ धिग्राज्यलोभं धिगथार्थलोभं धिग्धिग्रजनं स्वार्थरतं नितान्तम् । येनान्धवत्पश्यति नो सनेत्रः शृणोति नो कर्णयुतोऽपि मर्त्यः ॥ २५ ॥ लोभेन यस्तिष्ठति सङ्कटौघे प्राप्नोति मृत्युं स नरः क्षणेन । मृतस्य सर्वं व्रजति प्रणाशं त्यजेत्ततः क्लेशकरं प्रदेशम् ॥ २६ ॥ अज्ञातवार्त्तं जनकं जघान हन्तुं समर्थो नहि मां नरेन्द्रः । विज्ञातवृत्तोऽनिशमप्रमत्तं न शाकिनी हन्ति जनं यतोऽत्र ॥ २७ कूटं कुटुम्बं च विहाय सर्वं यात्वा प्रदेशं च विमुच्य देशम् । रक्षेत्स्वजीवं मनुजोऽतियत्नात् जीवन्नवाप्नोति यतः समस्तम् ॥ २८ ॥ न लज्जां कामान्धो न गुणमगुणं शून्यहृदयो विवेकं न क्रोधी स्वजनमपि नो लोभवशगः । न कार्यार्थी दोषं न कुलमपि च स्त्रीवशगतो न राज्यार्थी पापं गणयति न मानी च विन-

यम् ॥ २९ ॥ इत्थं चेतसि चिन्तयंश्चिरतरं चौलुक्यचूडामणिः श्रीमान्मालवमण्डलं निजजनं लात्वा ययौ लीलया ।
सोऽवन्त्यां च विधाय धाम कतिचित्तस्थौ दिनानि स्वयं ज्ञातुं भूपमनः पुनः पितृपुरं छन्नोऽगमत्सत्वरम् ॥ ३० ॥

॥ इति श्रीकुमारपालचरिते द्वितीयसर्गे प्रथमो वर्गः ॥ १ ॥



जानाति मां भूमिपतिः कदाचित्तत्का गतिः स्यादिति सोऽवधार्य । कुवासरान् यापयितुं कुमारो दधार सद्भूतिक-
वेषमेषः ॥ १ ॥ विवेद तं वेदविदो मुखेन कस्यापि भूपोऽपि तथास्वरूपम् । ततः पितुः श्राद्धदिने कुभावान्निमन्त्रया-
मास स तापसौघम् ॥ २ ॥ जटाधरं भस्मभरावलिप्तं तं वीक्ष्य नो निश्चयमाप भूपः । ज्ञानाय सम्यक् शठचित्तवृत्तिः प्रक्षाल-
यामास पदौ स तेषाम् ॥ ३ ॥ विलोक्य पद्माङ्कितपादमेनं धौतोत्तरीयाहरणच्छलेन । यावद्ययौ शस्त्रगृहं नरेशश्चकार
चिन्तामिति सोऽपि तावत् ॥ ४ ॥ सर्वः प्रपञ्चोऽस्य ममैव हेतोर्हनिष्यति क्ष्मापतिरद्य मां हि । करोमि किं कं शरणं प्रया-
मि रुद्धोऽमुना बुद्धिबलेन दैवात् ॥ ५ ॥ उत्पन्नबुद्धिर्वमनच्छलेन गृह्णन् स्वहस्तेन निजपानपात्रम् । याहीति सर्वैर्गदितः
प्रकाममगादगारात्स ततो नृपस्य ॥ ६ ॥ आकार्य मध्ये बहु दक्षिणायै व्याजेन नेष्यामि तमन्तकान्तम् । श्राग् भोज-
नान्ते विमृशन् गृहान्ते तस्थाविति क्षोणिपतिः क्षणं सः ॥ ७ ॥ आकारणार्थं पुनरागतः स विवेद तं नष्टमथो नरेशः ।
वधाय पृष्टे घनदुष्टबुद्धिः स्वं प्राहिणोत्सैन्यमदीनवीर्यम् ॥ ८ ॥ गच्छन् कुमारोऽपि निरीक्ष्य पश्चात्समापतन्तं पृतनासमू-
हम् । स हालिकं कर्म्मकरेषु मुख्यं मां रक्ष रक्षेति जजल्प दक्षः ॥९॥ स च्छद्मनाच्छाद्य स कण्टकोघै ररक्ष रक्षाकुशलः क्षणं

तम् । विलोक्य सैन्यैर्बवले च पश्चादन्धा द्विषो जाग्रति कर्मणि स्युः ॥ १० ॥ स्युः कण्टका भाग्यवतां गुणाय द्विषो भवन्ति स्वजना अभाग्यात् । रामस्य सेवां कपयोऽपि चक्रुर्वैरं दशास्यस्य च वन्धवोऽपि ॥ ११ ॥ ततो विनिर्गत्य जटां विहाय दधिस्थलीं प्राप स जन्मभूमीम् । अविन्दतानन्दममन्दमत्र स्वं लोकमालोक्य कुमारपालः ॥ १२ ॥ कालेन कापालिकवेषधारी सोऽगात्पुनः पत्तनमुत्तमर्द्धि । विलोकयल्लोकपतेश्छलौघं निनाय निर्मूढतया दिनानि ॥ १३ ॥ भूपेन बुद्धं स्वमवेत्य यावत्पलायितोऽसौ चपलायताक्षः । ददर्श तावन्निजपृष्ठदेशे प्रधावतो भूरितरान् पदातीन् ॥ १४ ॥ पश्यन् दिशो भीतिवशात् स गच्छन् ग्रामं पुरोवर्त्तिनमाससाद । निवेशितं भाजनपाचनान्तरे ररक्ष तं सज्जनकुम्भकारः ॥ १५ ॥ समं कुलालेन यशोधनाख्ये ग्रामे स्थितं वोशरिनामधेयः । भाण्डेषु निक्षिप्य ररक्ष दक्षो विप्रः कुमारं बहुरूपिणं तम् ॥ १६ ॥ एकान्तदेशे वितताान मित्रयुगेन सार्द्धं बहुशः स मन्त्रम् । तन्मन्त्रिणोद्विग्नमना द्विजस्य तावत्पिता वाक्यमिदं जगाद ॥ १७ ॥ अजातपुत्रस्य हि नाम तुल्यमालोच्यते किं बहुशो भवद्भिः । किं लाटदेशं किमु चित्रकूटं राज्ये निजे दास्यति वां कुमारः ॥ १८ ॥ श्रुत्वा वचस्तत्परिपाकरम्यं मेने कुमारः शकुनं मनीषी । जगाद दास्यामि च वां यदुक्तमनेन सर्वं तदहं स्वराज्ये ॥ १९ ॥ भ्रमन्नथो वोशरिणा समं स संजग्मिवान् ग्रामयुगं समन्तात् । क्षुत्क्षामकुक्षिः कथमद्य भक्तं मध्यंदिने विप्रमिदं जगाद ॥ २० ॥ ममास्ति भिक्षा जननी सहैव वदन्निति ग्राममसौ जगाम । निहुत्य पूर्णं स करम्बभाण्डं समागतोऽदात्कुमराय चान्यत् ॥ २१ ॥ सुप्ते कुमारे बुभुजे करम्बं स्वयं तदालोक्य हृदा स दध्यौ । हाहा जनान् स्वोद-

१ 'मध्ये' इत्यपि । २ 'भरात्' इत्यपि ।

रपूरणार्थं धिग् ये स्वबन्धूनपि वञ्चयन्ति ॥ २२ ॥ भक्ते जीर्णे भुज्यतामेतदेवं विप्रः प्रोचे श्रीकुमारं विहस्य । दत्तं पूर्वं
किं न तेनेति पृष्टः स्पष्टं सोऽवक् कारणं तत्पुरस्तात् ॥ २३ ॥ एकयेति जगदे घनिवध्वा लाहि भिक्षुवर! भक्ष्यमिदं त्वम्।
द्वारमस्य पिहितं नहि रात्रौ दूषणं मम न चेदहिदष्टम् ॥ २४ ॥ भुक्तवानहमिदं प्रथमं तद्देव! मा भवतु ते विषदोषः ।
तां निपीय सुहृदो मृदुवाचं सत्सुधामिव बुधो मुमुदेऽसौ ॥ २५ ॥ करम्बकग्राममिमं च तुभ्यं दास्यामि राज्ये सति सत्त-
माय । इत्थं वदन् डाङ्गरिकाभिधानं ग्रामं ययौ तेन समं स मानी ॥ २६ ॥ माकन्दवृन्दं फलितं विलोक्य बुभुक्षितस्त-
त्फललिप्सयाऽयम् । तत्रारुरोहोच्चतरं स चूतमेकं कुमारश्चतुरो रयेण ॥ २७ ॥ सुवर्णवर्णानि पचेलिमानि फलानि लात्वो-
त्तरति स यावत् । तावत्तदीशः कटुवाक् समेत्य जग्राह वेगेन पटीं सकोपः ॥ २८॥ स्फुटचटुवचनौघैर्नो पटीं प्राप तस्मात्
सदयहृदयवृत्तिर्निर्दयाच्छ्रीकुमारः । अहह महदभाग्यं साम्प्रतं वर्त्तते मे किमिह बहुभिरुक्तैश्चेति चिन्तां ततान ॥ २९ ॥
तदनु वोशरिविप्रसमर्प्पितां स परिवृत्य पटीमपरां पुरः । प्रतिनिवार्य तमादरतोऽचलत्सकलकौतुकदर्शनलालसः ॥ ३० ॥
नगनगरसमूहान्वीक्षमाणः क्षमायां विविधविबुधवृन्दैः प्रीतिरीतिं वितन्वन् । अननियुवतिहारं प्राप सद्वस्तुसारं रुचिर-
तरविहारं स्तम्भतीर्थं क्रमेण ॥ ३१ ॥ किमलका किमु नाकिपुरी कथं हरिपुरी किमु रावणपूरियम् । इति पुरं पुरमाकल-
यन्नलं भ्रममवाप स पापपराङ्मुखः ॥ ३२ ॥ कतिचिदिह दिनानि स्थेयमेवं विमृश्याविशदतिविशदात्मा लोकयंल्लोकचक्रम्
सुजनजनितहर्षां प्राप्तपुण्यप्रकर्षां सुमतिरथ विशाला पुण्यशालां विवेश ॥ ३३ ॥ श्रीहेमचन्द्राभिधसूरिराजं समा-

१ 'सोऽवक् पश्चात्कारणं—' इत्यपि ।

जभाजं स ननाम तत्र। तस्मै ददौ सोऽपि च धर्म्मलाभाशिषं सुखेनोपविशेत्युवाच ॥ ३४ ॥ अवृजिनजिनपूजानन्तरं तत्र तावदुदयन इति नाम्ना मन्त्रिमुख्यैसमेतः। गतवति जनजाते तं निरीक्ष्योपविष्टं सुतनुतनुमनोज्ञः कोऽयमेवं बभाषे ॥ ३५ ॥ कालाद्धिक्रमभूपतेर्नवनवत्यग्रैः शतैः शूलभृत्संख्यैरेप गतैर्भविष्यति महाराजाधिराजः क्षितौ। ज्ञात्वा ज्ञानबलेन लक्षणविदः श्रीहेमचन्द्रास्तदा मान्यः साम्प्रतमागतो निजगृहं मन्त्रिंस्त्वयेदं जगुः ॥ ३६ ॥ इति गुरुवचनान्ते मानपूर्वं गृहं स्वं तमनयदुदयाख्यः सोऽपि तस्थौ सुखेन। मुनिवरवरिवस्यां तत्र तन्वन्ननैषीत्क्षणमिव बहुकालं श्रीकुमारो मुदालम् ॥ ३७ ॥ विज्ञातवानन्यदिने वधार्थं समागतान् भूपभटान् स तत्र। स्नेहेन सूरीनथ मुत्कलाप्याचलत्पुरो जीवितरक्षणार्थम् ॥ ३८ ॥ भीतस्ततोऽसौ वटपद्रके ययावस्थात्तदुद्यानतरोस्तले क्षणम्। तत्रैव तावन्निरियाय मूषको रन्ध्रान्मुखे रूपकटङ्ककं दधत् ॥ ३९ ॥ सविस्मयं पश्यति तत्र तस्मिन् मुक्त्वा तमन्यं पुनरानिनाय। दन्तप्रमाणा अभवन् क्रमेण ते टङ्कका रूप्यमया मनोज्ञाः ॥ ४० ॥ चुचुम्ब विस्तार्य मुखेन सर्वांल्लुलोठ तेषामुपरि प्रमोदात्। स मूषको मोहवशात्क्षणेन कृत्वैकमास्ये प्रविवेश रन्ध्रम् ॥ ४१ ॥ आनीतवानेष बहिर्यथैतानन्तस्तथा नेष्यति मूढबुद्धिः। पाथेयहीनः किमहं वृथैव मुञ्चे विचार्येति ललौ कुमारः ॥ ४२ ॥ आखुः समेतो न विलोकयंस्तान् बभ्राम दीनोऽश्रुभरं विमुञ्चन्। पपात भूमौ सहसा मुमूर्छ क्षणेन मृत्युं च जगाम मोहात् ॥ ४३ ॥ वित्ते गृहीते मयकायमाप मोहेन मृत्युं गतचेतनोऽपि। निरापराधक्षयकारिणं मां धिग् धिग् वदन्नित्थमसौ चचाल ॥ ४४ ॥ भ्रामन् क्षमायां स

१ 'त्यजेऽयं चित्ते विचार्येति' इत्यपि ॥

कृशाङ्गोऽगमत्पुरे क्वापि वरे कुमारः ॥ ४५ ॥ कस्यापि
धनेन तेन कालं कियन्तं गमयाम्बभूव । निःशम्बलोऽथ क्षुधया जग्राह सायं चणकान् गुणज्ञः ॥ ४६ ॥
हट्टे वणिजः स तत्र मुक्त्वा कृपाणं निजमुत्तमस्य । पदातिकस्यासमनीतिविज्ञो माङ्गलिके कृतज्ञे
तमुत्तमं वीतधनं च मत्वा वणिग् जगौ खड्गमहो ! गृहाण । प्राप्तं हि मूल्यं चणका इमे ते कृता मया युक्तिवत् शाकु-
॥ ४७ ॥ वाणीविवेकावसरोपकृत्योस्तस्य स्मरन् सिद्धपुरं जगाम । राज्यं कदा भावि ममेति भक्त्या स श्रीजैनचैत्योपरिशान्तचेष्टां व्यलो-
निकं जगाद ॥ ४८ ॥ गतः प्रभाते शकुनेक्षणाय सार्द्धं सुधीः शाकुनिकः स तेन । कुम्भोपरिष्टादुपविश्य हर्षान्न-
कयञ्चक्ष्यमुखीं कुमारीम् ॥ ४९ ॥ उड्डीय मौलौ चटिकावदन्ती स्वरत्रयं शोभनमुच्चचार । अवामपक्षं मुहुरुत्क्षिपन्ती
नर्त रम्यं स्वरमुच्चरन्ती ॥ ५० ॥ सुखोपविष्टा विदधे कुमारी स्वरत्रयं भूजलवह्निसंज्ञम् । मनीषितादप्य-
तत्रैव भक्ष्यं च चखाद लब्धम् ॥ ५१ ॥ विलोक्य सर्वं च विचार्य चित्ते प्रोवाच विज्ञः कुमरं मुदेति । सर्वार्थसिद्धं
धिकार्थसिद्धिः श्रीजैनधर्माद्भवतो भवित्री ॥ ५२ ॥ श्रीसिद्धभूपालभयादजस्रं भ्रमत्स कोलम्बपुरं जगाम । तत्साध-
वहुमन्त्रसिद्धं योगीश्वरं तत्र समारराध ॥ ५३ ॥ सन्तोषितोऽस्मै वहुविघ्नसाध्यं राज्यप्रदं मन्त्रमदात्स योगी । विधाय
नोपायमपायहीनं दिदेश चादेशकराय तस्मै ॥ ५४ ॥ शस्त्रं समादाय ययौ श्मशाने भूतारजन्यां स वलिर्वलिष्ठः । स्वमांसैः ।
कुण्डं पुरतोऽमुचत्तं तत्रोपविष्टः स जजाप मन्त्रम् ॥ ५५ ॥ सहस्रसङ्ख्यं स विधाय जापं कुण्डेऽकरोद्धोममलं सत्त्व-
नाशाग्रचक्षुर्दृढवद्धपद्मासनः पुनर्मन्त्रजपं वितेने ॥ ५६॥ पश्यन् सिंहव्याघ्रसर्पादिदुष्टान् शृण्वन् शब्दान् दुःसहान् सिंहसार्थान्
हीनैः । चित्तं कृत्वा निश्चलं निश्चयेन तन्वन् जापं नाप शङ्कां कुमारः ॥५७॥ उग्रव्याघ्रान् घुर्घुररवान् दुःसहान्

लोलान् व्यालान् पटुकटुरवान् राक्षसान् साट्टहासान् । घोरान् घूकानतिशितिशिवाः शाकिनीक्रूररूपाः पश्यन् शङ्काङ्कुरमपि मनाग् नो प्रपेदे कुमारः ॥ ५८ ॥ सन्धुक्षन्तः स्फारफूत्कारवातैः कुण्डाग्निं द्राग् वेष्टयामासुरेनम् । ध्यानध्वंसं कर्तुमत्यन्तदुष्टाः श्यामाश्यामा दन्दशूका दशन्तः ॥ ५९ ॥ गात्रे सर्पैर्वेष्टितोऽसौ श्मशाने वासी भूतव्रातमध्योपविष्टः । आशावासा ध्वस्तकामो विरेजे तस्मिन् काले शम्भुवच्छ्रीकुमारः ॥ ६० ॥ रे रे दुष्टोत्तिष्ठ तिष्ठ क्व जापं धत्से तापं प्राप्स्यसि त्वं च मत्तः । शब्दं कुर्वन्नब्दवत्पूरिताशं तत्रायातः क्षेत्रपालः करालः ॥ ६१ ॥ क्षेत्राधीशं मामवज्ञाय मन्त्रसिद्धिं रे रे वाञ्छसि त्वं च मत्तः । क्रूरारावैस्त्रासयन् सत्त्वजातमागत्यास्थात्तत्पुरः क्षेत्रपालः ॥ ६२ ॥ विकृतवदनमुच्चैः कुक्कुरारूढमेनं खरडमरकरावैः संभृताशासमूहम् । असिततमतमिस्राकल्पमालोक्य भीतिं कलितविमलसत्त्वो नाभजच्छ्रीकुमारः ॥ ६३ ॥ शुनकभसितशब्दैः कम्पयन् सत्त्वसङ्घं दृढतरपदघातैः पातयन् भूध्रशृङ्गान् । तदपि विगतशङ्कातङ्कमेनं निरीक्ष्योत्कृतकलकलनादोऽन्तर्दधे क्षेत्रपालः ॥ ६४ ॥ गतवति विकराले रुण्डमालाविशाले विधृतनरकपाले श्यामले क्षेत्रपाले । तदनु सपदि तुष्टास्मीति नादं वदन्ती वदनविजितचन्द्रा प्रादुरासीन्महाश्रीः ॥ ६५ ॥ ध्यानं संवृणु लाहि साधकवरं तुष्टास्मि सत्त्वेन ते राज्यं प्राप्स्यसि गूर्जरात्रविषये त्वं वत्सरैः पञ्चभिः । इत्युक्त्वा सुधया विधाय विगतव्यालव्रणं तं क्षणादन्तर्धानमगात्प्रभातसमये सत्त्वैः समं सेन्दिरा ॥ ६६ ॥ मनसि स चिरकालाद्राज्यलाभं विभाव्य भुवमभिनवचित्रां वीक्षितुं सञ्चचाल । सुकलसकलदेशॉल्लङ्घयन् कौतुकोत्को निखिलनगरकान्तामेप कान्तीमवाप ॥ ६७ ॥ पुरपरिसरे दृष्ट्वा योषिज्जनव्रजमञ्जसा मिलितमतुलं तत्रागच्छद्विलोकनकौतुकी । निहतपुरुषं पश्यन्तीनां तदा किल योषितां सरसवचनं

श्रुत्वा चित्ते स विस्मयमादधे ॥ ६८ ॥ सुमुखि ! विरलदन्तं चारुकूर्चाभिरामं मुखमतिसुखमायुक् नित्यताम्बूलरागम्। श्रवणयुगममुष्यास्कन्धदीर्घं च बाले ! कलय कचकलापं चातिदीर्घं नरस्य ॥ ६९ ॥ एता विदन्ति कथमस्य विमस्तकस्य केशादिलक्षणमहो ! मम चित्रमेतत् । पृष्टाः स्वयं मृगदृशः कुमरेण तेन ताः प्रोचिरे शृणु नरोत्तम ! सर्वमेतत् ॥ ७० ॥ किणः पृष्ठे वेणीं वदति सुतरामेष सरलां किणौ स्कन्धे कर्णाभरणवरलक्ष्मी निगदतः । उरः सर्वं गौरं वदति नितरां कूर्चविभवं सचूर्णश्चाङ्गुष्ठो वदति मुखरागं मतिमताम् ॥ ७१ ॥ प्रान्तारुणा विरलतां वदति द्विजानां लध्वङ्गुलीतिवचनं स निशम्य तासाम् । पश्यन्ति सर्वमिह बुद्धिदृशा महान्तो ध्यायन् हृदीति सरसीं सहसा जगाम ॥ ७२ ॥ सरससरसि पीत्वा पुष्करं वस्त्रपूतं श्रमहरमथ तेने मज्जनं सज्जनोऽसौ । सितकरकरवर्णं पालिदेशे स वर्ण्यं ध्वजकलशमनोज्ञं चैत्यमेकं ददर्श ॥ ७३ ॥ कमपि परमदेवं तत्र नन्तुं स यातः सुकृतमतिरपश्यन्मस्तकं पूज्यमानम् । किमिदमिति च पृष्टः पूजकस्तेन तस्यासममकथयदेवं वृत्तमामूलचूलं ॥ ७४ ॥

॥ इति श्रीकुमारपालचरिते द्वितीयसर्गे द्वितीयो वर्गः ॥



अत्र त्रासितशत्रुर्बभूव भूमिपतिः पुरा भीमः । स्थाम्ना नाम्ना च सदा भीमसमो दानतः कर्णः ॥ १ ॥ निजयशसे शस्यतमं सरोवरं वरसरोजराजियुतम् । सोऽखानयन्नरेशः परोपकारैकनिरतमतिः ॥ २ ॥ तस्मिन् भृते जलौघे राजा सपरिच्छदो ययौ द्रष्टुम् । तत्क्षीरसागराभं निरीक्ष्य मुमुदेतरामेषः ॥ ३ ॥ सर्वासु दिक्षु पश्यन् जलजालीसंस्थितं ददर्शैकम् ।

मस्तकमतिरुचिरतरं वरभूषाभूषितं भूपः ॥ ४ ॥ पश्यति विस्मितचित्ते राज्ञि सलोके शिरस्तदा बाढम् । एकेन त्रुडति जगन्निगददिदं तत्तिरोदधे तत्र ॥ ५ ॥ आकर्ण्याश्रुतपूर्वं वचस्तदीयं चमत्कृतो नेता । किमिदमिति वीतशङ्कं विज्ञान् पप्रच्छ तद्धेतुम् ॥ ६ ॥ नित्यं तद्वदति तथा बलिपूजाद्यैर्न शान्तिमायाति । स चकितचेता नेता विदुषः पप्रच्छ शान्त्यर्थम् ॥ ७ ॥ ते सर्वशास्त्रनिपुणा न जज्ञिरेऽलं तदुत्तरं दातुम् । तदनु सकोपो भूपोऽभ्यधादिदं भीषणाकारः ॥ ८ ॥ रेरे भजत विदेशं देशं त्यजताशु मामकं सर्वे । वदतैतदुत्तरं वा विचार्य चित्ते चिरं यूयम् ॥ ९ ॥ कन्दर्पदर्पकलिता ललितापि मतिर्न जायते यूनाम् । निपुणा दीर्घविचारे सारेतरगामिनी कामम् ॥ १० ॥ वेत्ति यदेकः स्थविरः स्थिरबुद्धिस्तरुणकोटयस्तन्नो । यो हन्ति नृपं लतया स पूज्यते वृद्धवाक्येन ॥ ११ ॥ इति तैर्विमृश्य सर्वैर्मरुदेशे दीर्घदर्शिनो वृद्धान् । तत्प्रष्टुं चतुरतराः प्रहिता उच्चैश्चतुर्विप्राः ॥ १२ ॥ तत्र गताः पष्ट्यब्दं पुरुषं क्षेत्रस्थितं दृढशरीरम् । दृष्ट्वा हृष्टा यावत्प्रश्नं कुर्वन्ति ते विप्राः ॥ १३ ॥ तावत्पिता पुरो मे तेनेति निवेदितं गतास्तत्र । तावदशीतिसमातिगवयसं वृद्धं पुरो ददृशुः ॥ १४ ॥ तमजाः प्रचारयन्तं काकेति वदन्ति यावता विप्राः । तावत्पितास्ति गेहे तद्वाक्यादिति दधुश्चिन्ताम् ॥ १५ ॥ किं विद्यते शताधिकमित्यायुर्वादिनो ययुर्गेहम् । अष्टोत्तरशतवयसं ते पश्यन्वाडवा वृद्धम् ॥ १६ ॥ तं मुञ्जरज्जुकरणे सज्जं घनशुनकडिम्भकोपेतम् । मुदिताश्चरितमुदित्वा दृष्ट्वाऽपृच्छन् स्वसंदेहम् ॥ १७ ॥ वृद्धो विमृश्य चित्ते विप्रान् प्राहेति भोजनं कृत्वा । उत्तरमुत्तममेतद्दास्येऽहं भुज्यतां तर्हि ॥ १८ ॥ इत्युक्तियुक्तिपूर्वं तेनाभीरेण भोजिता विप्राः । स्वगृहे निषेधवाक्यं तैरपि नोक्तं स्वकार्येण ॥ १९ ॥ स्थविरपरिवेषितं ते तद्दाक्षिण्यान्निजार्थमिद्ध्यर्थम् । शुन-

कौच्छिष्टं तक्रं संपपुरवमत्य दोषौघम् ॥ २० ॥ नो शूद्रभक्तदोषो न श्वस्पृष्टान्नपानदोषोऽपि । दोषज्ञैरपि गणितः स्वकार्य-
लोभातुरैर्विप्रैः ॥ २१ ॥ विहिते भोजनकृत्ये स्थविरः प्रोवाच वाडवानेवम् । अध्वन्युत्तरमेतत्कथयिष्ये गम्यतां तस्मात्
॥ २२ ॥ अध्वव्ययोऽस्य मूल्यात् शुध्यति वो गृह्यतामिदं तस्मात् । इत्युक्त्वा लघुकुक्कुरचतुष्टयं दत्तवांस्तेभ्यः ॥ २३ ॥
चत्वारोऽपि च हस्ते लोभविहस्तास्तदैककं लात्वा । वृद्धानुगताश्चेलुः क्षिप्रं विप्राः प्रति स्वपुरं ॥२४॥ एत्य कियन्तं मार्गं वृद्धे
वलितेऽवदन्निदं विप्राः । सन्देहोऽद्यापि तथा वदोत्तरं सत्तमास्माकम् ॥ २५ ॥ श्रुत्वा वचस्तदीयं वृद्धोऽवददुत्तरं मया
दत्तम् । तेऽवोचन्नस्माभिर्नावगतं न श्रुतं तत्किम् ॥ २६ ॥ वर्षीयान्पुनरूचे युष्माभिर्मद्गृहे कथं भुक्तम् । शुनकोच्छिष्टं
तक्रं पीतं कस्मादिदं ब्रूत ॥ २७ ॥ एतेऽतिपापरूपाः श्वानो विष्टाशिनः कथं स्पृष्टाः । युष्माभिर्विदितं नो किमेतदपि
सर्वशास्त्रज्ञैः ॥ २८ ॥ शुनो गर्दभचण्डालमद्यभाण्डरजस्वलाः । स्पृष्ट्वा देवलकं चैव सचेलं स्नानमाचरेत् ॥ २९ ॥ ज्ञातं
चेत्तर्हि कथं स्पृष्टास्तेनेति भाषितेऽवोचत् । लोभेनेदं सर्वं विरुद्धमपि विहितमस्माभिः ॥ ३० ॥ इदमाकर्ण्य स कर्णौ
वर्णगुरूनाह सस्मितं वृद्धः । उत्तरदानाय मया विचेष्टितं सर्वमप्येतत् ॥ ३१ ॥ युष्मादृशेषु युक्त्या वक्तुं विज्ञेषु युज्यते
विप्राः ! । सर्वप्रसिद्धमेतद्यद्विश्वं लोभतो ब्रुडति ॥ ३२ ॥ इत्युक्ते ते मुदिताः स्थविरमनुज्ञाप्य वाडवाः प्रययुः । निजवि-
षयं दृग्विषयीकृतचित्राः स्तोककालेन ॥ ३३ ॥ तत्सर्वं भूपतये निवेदयामासुराशु ते तज्ज्ञाः । सोऽवक् शिरः पुनश्चेन्न
निस्सरिष्यति तदा सत्यम् ॥ ३४ ॥ भूपो भूरिपरिच्छदयुतो गतः सरसि तत्परीक्षायै । तस्मिन्नर्थे कथिते शिरो निवृत्तं
क्षणादेव ॥ ३५ ॥ भूपतिना रुचिरतरं चैत्यमिदं कारितं सरस्तीरे । एतच्छिरोऽस्य मध्ये प्रतिष्ठितं तत्प्रसिद्ध्यर्थम् ॥ ३६ ॥

इति श्रुत्वा वृत्तं श्रुतिसुखकरं तस्य शिरसो विशत्वङ्गं द्रङ्गं कुमरनृपतिर्विस्मितमनाः। स तस्थौ स्वस्थात्मा कतिपयदिनानि क्रमवशात्। भ्रमन् गुर्वीमुर्वीमसकृदगमन्मल्लिविषयम् ॥ ३७ ॥ श्रीमल्लिवालविषये विदितं दितांहाः कोलम्बपत्तनमसौ तदवाप भूपः। यस्याग्रतो हरिपुरी स्वमवेत्य हीनमेका पपात जलधावपरा च शून्ये ॥ ३८ ॥ प्रातः स एष्यति भविष्यति गूर्जरायां यो भूपतिः स भवता भृशमर्चनीयः। कोलम्बपत्तननृपो जगदे शिवेन स्वप्ने तदेति वसुधावलयैकसारः ॥ ३९ ॥ तमुपलक्ष्य निवेश्य निजासने शिववचः सकलं स निवेद्य च। अतितरां निजराज्यपदार्पणे तमथ सोऽर्थितवान् वसुधाधिपः ॥ ४० ॥ राज्यं निवार्य तरसा निजकीर्तिहेतोः सत्स्वाभिधानविदितं शिवचैत्यमेकम्। सोऽकारयन् नृपतिना निजनाणकं च प्रावर्तयत्प्रवरसिंहसमानवीर्यः ॥ ४१ ॥ प्राप्तः क्रमेण पुनरुज्जयिनी कुमार आमोदयत्परिजनं सकलं स्वकीयम्। पश्यन् पुरीपरिसरं बहुचित्ररम्यं गाथामवाचयदिमां शिवचैत्यभित्तौ ॥ ४२ ॥ पुन्ने वाससहस्से सयम्मि वरिसाण नवनवइअहिए। होही कुमरनरिन्दो तह विक्कमराय सारिच्छो ॥ ४३ ॥ गाथां लिलेख क इमामिह लेखमान्यः पप्रच्छ निर्म्मलमतिर्मुनिमेकमेवम्। इत्थं जगाद स गुरुर्गुणगौरमेनमस्याः स्वरूपमखिलं शृणु हे कुमार ! ॥ ४४ ॥ शृणु शृणु कुमर ! त्वं सिद्धसेनो दिवाकृद्धनविदितचरित्रः पूर्वमासीत्पवित्रः। स इह लिखितवान् श्रीविक्रमार्केण पृष्टः स्फुटरुचिरविचारां चारुगाथामिमां च ॥ ४५ ॥

॥ इति श्रीकुमारपालचरिते द्वितीयसर्गे तृतीयो वर्गः ॥

श्रीसिद्धसेनाभिधसूरिराजो बभूव मिथ्यात्वतमोऽब्जराजः । अद्यापि यन्नामविभाभिभूता न वादिघूकाः प्रकटीभवन्ति
॥ १ ॥ विद्यामदादन्यदिनेऽवदत्सः गुरोः पुरस्तादिति सङ्घसाक्षम् । भवन्निदेशात्करवाणि सर्वजिनागमं संस्कृतभाषयाहम्
॥ २ ॥ तमुन्मदं वीक्ष्य गुरुर्बभाषे धिग् मूर्ख ! गर्वं कुरुषे किमेवम् । विज्ञा न किं पूर्वधरा अभूवन् यैः प्राकृतोऽयं वि-
हितः कृतान्तः ॥ ३ ॥ स्त्रीणां नृणां तुच्छधियां शिशूनामनुग्रहार्थं विदधे गणेशैः । जिनागमः प्राकृतभाषयाऽयं तद्गर्हया
भूरि बभूव तेऽघम् ॥ ४ ॥ ततः स सूरिः स्वगुरोः पदान्ते विराधकं स्वं भृशमाशुशोच । विराधिता संसृतिहेतवे स्याच्छ्री-
मज्जिनाज्ञेति विचार्य चित्ते ॥ ५ ॥ संयोज्य हस्तौ निजमस्तकेऽथ निरस्तगर्वः स्वगुरोः पुरस्तात् । शोधिं स सिद्धान्त-
विराधनोत्थां ज्ञातार्थसार्थो विनयाद्ययाचे ॥ ६ ॥ पाराञ्चिकाख्यं बहुसङ्घसाक्षं तपस्तदा द्वादशवर्षसाध्यम् । विराधिता-
ज्ञाय गुरुर्गरिष्ठं तस्मै स्मयापोहकृते ददौ सः ॥ ७ ॥ स्वच्छः स गच्छं सहसा विहायागच्छन्नं गर्भितवेषधारी । तन्वं-
स्तपस्तद्विधिना विशालं जगाम वर्षे नवमे विशालाम् ॥ ८ ॥ श्रीविक्रमार्कं प्रतिबोध्य धर्मोन्नतिं करोमीति विचार्य
चित्ते । गत्वा नृपद्वारि निवारितांहा न्यवेदयद्द्वाःस्थमुखेन चेति ॥ ९ ॥ हस्तन्यस्तचतुःश्लोको द्वारि तिष्ठति रक्षितः
दिदृक्षुर्भिक्षुरायातः किमागच्छतु गच्छतु ॥ १० ॥ समागतं तमाकर्ण्य सुकविं परिभाव्य च । तेनैव विक्रमादित्यः समा-
दिशदिदं मुदा ॥ ११ ॥ दीयन्ते दशलक्षाणि शासनानि चतुर्दश । दिदृक्षुर्भिक्षुरायातोऽथवागच्छतु गच्छतु ॥ १२ ॥
प्रभावनाचिकीरेष प्रभुर्भूमिपतेः सभाम् । विवेश विशदं श्लोकचतुष्टयमुवाच च ॥ १३ ॥ आहते तव निस्साने स्फुटितं
रिपुहृद्घटैः । गलिते तत्प्रियानेत्रे राजंश्चित्रमिदं महत् ॥ १४ ॥ अपूर्वेयं धनुर्विद्या भवता शिक्षिता कुतः । मार्गणौघः

समभ्येति गुणो याति दिगन्तरम् ॥ १५ ॥ त्वत्कीर्तिर्जातजाड्येव चतुरंभोधिमज्जनात् । आतपाय महीनाथ ! गता मार्त-
ण्डमण्डलम् ॥ १६ ॥ सर्वदा सर्वदोऽसीति मुधा संस्तूयसे बुधैः । नारयो लेभिरे पृष्ठिं न वक्षः परयोषितः ॥ १७ ॥
अनुच्छिष्टेन तेनोच्चैर्वचसा रञ्जितो नृपः । दिशां चतसृणां राज्यं विहायान्तःपुरं ददौ ॥ १८ ॥ कुरु राज्यं महीनाथ !
निजं कृतमनेन नः । इत्युक्ते प्रभुभी राजा गमनार्थं स पृष्टवान् ॥ १९ ॥ विद्वद्गोष्ठीरसेनेति सूरिराचष्ट स स्फुटम् ।
निवेश्य स्वासने हृष्टस्ततो भूपोऽनमद्गुरुम् ॥ २० ॥ अतिकविकविचित्तानन्दकन्दाम्बुदाभं निजरादसि तदीयं हृद्यमापीय
वाक्यम् । क्षरदमृतसमानं दत्तसन्मानदानं स्तुतिमिति मतिगम्यामेष रम्यां वितेने ॥ २१ ॥ असारे संसारे सुमतिशरणे
काव्यकरणे यथेष्टं चेष्टन्ते कति न कवयः स्वस्वरुचयः । परं दुग्धस्निग्धं मधुररचनं यस्तु वचनं प्रसूते ब्रूते वा भवति
विरलः कोऽपि सरलः ॥ २२ ॥ नृपतिविहितचित्रो मित्रवत्तत्र तस्थौ समयमयमपारं सारमुद्यद्विनोदैः । यतिपतिरथ
भूपं तं समापृच्छ्य बाढं त्रिनयनगृहमागाच्चान्यमादाय देहम् ॥ २३ ॥ स सायं निर्मायः शिवभुवनमध्ये यतिपतिः
प्रमीलामुन्मीलत्सकलकलविद्यः समकरोत् । गतः पूजाकारी तमुपरि तथा वीक्ष्य कुपितस्तुतोदासन्मारैस्तदपि स न
निद्रामपि जहौ ॥ २४ ॥ नरपतिरपि तत्रोपाययौ चित्रितान्तर्यतिपरिवृढमेवं तं बभाषे दृढाङ्गम् । रचयसि किमु भिक्षो !
शङ्कराशातनां हे सृजति जगदशेषं भस्मसादेष रुष्टः ॥ २५ ॥ स्तवं शम्भोर्नव्यं कुरु गुरुमतेऽङ्घ्री भज चिरं विरञ्च्याद्या-
देवा विदधति नुतिं यस्य सततम् । ददातीशस्तुष्टः स्फुटमिह जगद्राज्यमतुलं फलं मोक्षाद्युच्चैर्वितरति परत्रायमभयम्
॥ २६ ॥ अवददिति मुनीशो दर्शितस्वोरुमूर्त्तिः तदनु वदनपद्मं तस्य पश्यन्नृपस्य । मदभिहितनुतिं नो सासहिः शङ्क-

रोऽयं तरणिकिरणमालां यद्वद्विद्धोऽपि घूकः ॥ २७ ॥ न दोषो मे विघ्नो यदि भवति कश्चित्पशुपतेर्गदित्वैवं सूरिः स्तव-
नमथ नव्यं स विदधे । कथं सिद्धः कश्चित्किमुत धिषणः किं कविरसाविदं दध्यौ राजा मनसि स च शृण्वंस्तदमलम्
॥ २८ ॥ स्वयम्भुवं भूतसहस्रनेत्रमनेकमेकाक्षरभावलिङ्गम् । अव्यक्तमव्याहतमस्तदोषमनादिमध्यान्तमपुण्यपापम् ॥ २९ ॥
एवं स्तवं वदति यावदसौ मुनीशस्तावत्खडत्खडतिशब्दभरो बभूव । क्रुद्धः शिवो ननु विधास्यति भस्मसात्त्वामित्थं ज-
गाद जनता सहितो नरेशः ॥ ३० ॥ चकम्पे भूरुच्चैस्तदनु सह लोकेन नितरामहो ! किं भावीति प्रभुरपि बभूवोत्सुक-
मतिः । ततो धूमश्रेणिः सह मुनिपदुःखेन निरगात् क्षणात्क्षोणीपीठाद्भ्रमरकुलनीलातिकुटिला ॥ ३१ ॥ अथ पशुपति-
लिङ्गं तद्दृढाङ्गं चतुर्धा कजमिव वरभाभिस्तत्र प्रस्फोट विद्धम् । दधदधिकरयुग्मं पार्श्वनाथस्य बिम्बं विमलमुरगराजः
सप्रियः प्रादुरासीत् ॥ ३२ ॥ स्तोत्रं मदीयमिह यः सहते सुरार्हो देवः स विश्वमहितः स्वयमाजगाम । तुष्टाव पार्श्व-
जिनमेवमसावुदीर्य कल्याणमन्दिरमहास्तवनेन सूरिः ॥ ३३ ॥ संस्थाप्य तत्र जिनपं भुजगाधिराजो नत्वा गुरुं निजपुरं
स जगाम वेगात् । श्रीसिद्धसेनगुरुदेशनया बभूव श्रीविक्रमः स जिनराजमतैकभक्तः ॥ ३४ ॥ एकदा स्वगुरुमादरादिदं
पृष्टवान्नरपतिः स विक्रमः । मत्समः कलियुगे परो नृपः संभविष्यति विभो ! किमार्हतः ॥ ३५ ॥ कलियुगे भविता पर-
मार्हतः कुमरभूपतिरत्र नराधिपः । गुरुभिरित्युदिते तदलेखयत्स इह पद्यमिदं मुदिताशयः ॥ ३६ ॥ गाथावृत्तमिदं
निशम्य कुमरः कालस्य सम्पूर्णतां संज्ञायाः समतां विचिन्त्य च चिरं मेने मुनीन् ज्ञानिनः । निन्ये तत्र दिनानि कानि-
चिदपि प्रीतः कुटुम्बाग्रहाद्भूयो भूरिकलश्चचाल विपुलामालोकितुं कौतुकी ॥ ३७ ॥ स देशेषु भ्रान्त्वा वहुषु रसिको

योगिनिपुरं विवेशाश्चर्याणामनणुवसतिः क्ष्मापतनयः । स्थितस्तत्राश्रौषीत्रिदिवगमनं सिद्धनृपतेस्ततो गन्तुं सज्जः समभवदयं च स्वविषयम् ॥ ३८ ॥ संययौ चर्म्मकारापणं यावतोपानदादानहेतोः प्रयाणोत्सुकः । तद्द्वयं न्यस्तवान् पादयोस्तावता बालचन्द्राभिधः शिल्पिमुख्यः स्वयम् ॥ ३९ ॥ चरणरक्षणयोरनयोरहं न किल दातुमलं समवेतनम् । इति जजल्प स शिल्पिनमुच्चकैः कलितकोमलवाग् विमलाशयम् ॥ ४० ॥ इदं पदत्राणयुगं चकास्ति ते पदोः सदैवाम्बुजराजमानयोः। व्रज स्वदेशं भज राज्यमुज्ज्वलं तं जल्पति स्मेति स शिल्पिपुङ्गवः ॥ ४१ ॥ कारुतर ! त्वं गूर्जरदेशे भूमिपतिं परिभाव्य कुमारम् । मित्र ! समेया वीतविलम्बं सद्य इदं निगदन् स चचाल ॥ ४२ ॥ नगनगरसमूहाल्लीलया लङ्घयित्वा सकलनिजकुटुम्बं सार्द्धमादाय दक्षः । अगमदगपधैर्यो वायुवेगेन वङ्गं स्फुरदुरुतररङ्गं सिद्धदङ्गं दृढाङ्गः ॥ ४३ ॥ समयमयं परिभाव्य समेतं निजपरिवारं तत्र विमुच्य । अगमदथासिकरो निशि गेहं स्वसुरवमत्य च तत्पतिभीतिम् ॥ ४४ ॥ शर्वरीमध्यदेशे विदेशागतो जामिमेषोऽनमच्छन्नवेषो भिया । सोदरं मन्दिरे भर्तृभीता सती सा सती स्थापयामास साशा रहः ॥ ४५ ॥ तिष्ठन् सुखं स्वभगिनीसदने स मेने स्वं दुर्जयं गतमिवाशुभकर्म्म धर्मी । सस्मार सूरिवचनस्य विचारसारः श्रीमान् कुमारनृपतिश्च तदा वदान्यः ॥ ४६ ॥ श्रीरत्नसिंहगुरुपादसरोरुहालिश्चारित्रसुन्दरगणिर्यदिदं चकार । श्रीमत्कुमारचरितस्य गुरुस्वरूपः सर्गः समाप्तिमगमत्सुगमो द्वितीयः ॥ ४७ ॥

॥ इति भट्टारक–श्रीरत्नसिंहसूरिशिष्योपाध्यायश्रीचारित्रसुन्दरगणिविरचिते श्रीकुमारपाल-
चरिते महाकाव्ये हिण्डिवर्णनो नाम द्वितीयः सर्गः ॥ ग्रन्थाग्रं २८४ ॥

॥ अथ तृतीयः सर्गः ॥

अथ प्रमीते जयसिंहदेवे सेनापतिः कृष्णभटः स यत्नात् । षण्मासमस्तारिबलो ररक्ष राज्यं कुमारागमनं प्रपश्यन् ॥ १ ॥
व्यलोकयन्तं बहुधा स्वदूतैर्न क्वापि वार्त्तामपि तस्य लेभे । ततो मृतं तं परिभाव्य चित्ते जज्ञे निराशः पृतनापतिः सः
॥ २ ॥ चिन्ताकुलं श्रान्तशरीरमेतं व्यलोक्य तं राजगृहात्समेतम् । आगत्य भक्त्यान्यदिनेऽन्वयुङ्क्त चिन्तानिदानं कुम-
रस्वसा सा ॥ ३ ॥ स प्राह भद्रे ! शृणु कारणं तत् शून्योऽस्ति पट्टो नृपतेरभावात् । चिन्ता तदर्थं हृदये ममास्ति राज्यं
गतप्रायमिदं च मन्ये ॥ ४ ॥ बभूव यो राजपदस्य योग्यः सोऽगात् क्वचिद्भूपभयात्कुमारः । धर्तुं न राज्यं तमृते परो-
ऽलं हित्वा हि राज्यं जगतीं यथान्यः ॥ ५ ॥ अथाविरासीत्कुमरः क्षणेन ज्ञात्वा मनस्तस्य मनीषिमुख्यः । अभीष्टयोस्तत्र
मिथोऽतिसृष्टा गोष्ठी तयोः शिष्टतराजनिष्ट ॥ ६ ॥ त्रयः कुमाराः स्वगुणैरुदाराः सन्ति स्ववीर्या धृतभूमिभाराः । कस्मा
इदं विस्मयकार्यमीषु वितीर्यते राज्यमहो ! महीयः ॥ ७ ॥ इति विचार्य जगाम स संसदं तदुरुधैर्यपरीक्षणहेतवे । गत-
भयं सनयं कुमरत्रयं स्वयमजूहवदूहविचक्षणः ॥ ८ ॥ महीपालनामा समागादथो तां सभामिभ्यवच्छोभमानः स्वमूर्त्या ।
सनाथः श्रिया सैन्यनाथाय कृत्वा प्रणामं मुदोपाविशत्तत्पुरस्तात् ॥ ९ ॥ सेनापते ! यच्छ निदेशमेतो जगाद हर्षादिति
कीर्त्तिपालः । मेने स मानी हृदि हीनसत्त्वौ तौ दीनवाक्येन विचारसारः ॥ १० ॥ गुरुकृपाणकरः कुमरः क्षणादमरनाथ
इवाप सभामभीः । विगणयंस्तृणवन्निखिलान्नृपान् स्वयमयं निषसाद नृपासने ॥ ११ ॥ कुरु गुरुमभिषेकं त्वं विवेकेन
कृष्णभट ! सुभटसमूहान् रंहसाकार्य वर्यान् । कुरुत नृपतयो रे ! किं प्रणामं न मह्यं धृतधृतिरिति सोऽवक् सिद्धराजा-

सनस्थः ॥ १२ ॥ सत्त्वाधिकं तं परिभाव्य वेगाच्चक्रेऽभिषेकं पृतनापतिः सः । सोपायना भूमिभुजः ससम्रा वितेनिरेऽस्मै मुदिताः प्रणामम् ॥ १३ ॥ दधारातपत्रं पवित्रं विचित्रं शिरस्यस्य शस्याशयः सैन्यनाथः । मुदा सोदरौ सादरं पार्श्वदेशे वरे चामरे चालयामासतुर्द्वौ ॥ १४ ॥ जगुर्मङ्गलान्युज्ज्वलान्यङ्गनौघा ददुर्वेदवाक्याशिषं भूमिदेवाः । नृपं तुष्टुवुर्बन्दिनो हृष्टचित्तास्ततं नृत्यमातेनिरे वारवध्वः ॥ १५ ॥ दानमानन्दितो मानपूर्वं तदादादपूर्वं स पूर्वापतुल्यस्तथा । बन्दिनामिन्दिराया भरैर्मन्दिरेऽदारयद्वारुदारिद्र्यपूरं यथा॥१६॥चङ्गरङ्गाङ्गणे संस्थितं सुस्थिताश्चारुपौराङ्गना गौरदेहं मुदा। तं त्ववर्धापयन् वर्द्धमानं श्रिया वर्द्धमानं विधायाग्रतो मौक्तिकैः ॥ १७ ॥ पार्श्वगोश्चामरैर्वीज्यमानो भृशं धार्यमाणातपत्रस्तपावान्नृपः । राजराजीवृतो राजपाटीं व्यधाद्वारणेन्द्रोपविष्टो विशिष्टोत्तमः ॥ १८ ॥ वर्षमेकं सहर्षप्रकर्षावृतो मण्डले दण्डमाखण्डलाभोऽमुचत् । बन्दिवृन्दं च माकन्ददण्डं पुनर्निःसुतानां धनं मुक्तवान् सर्वदा ॥ १९ ॥ चित्रकूटस्य पाटीं पटिष्ठो ददौ सज्जनायाथ संसज्जनानन्दनः । लाटदेशं भृशं पादितारिव्रजो वोशिरेरर्पयद्ग्रामयुग्मावृतम् ॥ २० ॥ अदादुपानद्युगलं पुरा यस्तस्मै ददौ ग्रामयुगं गुणज्ञः । इहोपकारोऽवसरे कृतोऽन्यैर्नो विस्मृतिं याति सतां कदाचित् ॥ २१ ॥ तस्मै ददौ यश्चणकान् गुणज्ञः पुरा कुमाराय वणिग्वरेण्यः । अदान्मुदा वागडदेशसारं तस्मै पुरं श्रीवटपद्रसंज्ञम् ॥ २२ ॥ युक्तं कुमारोऽमरराजतुल्यः क्षमाभृतो यन्निखिलानजैषीत् । करेण वज्रं दधता निजेन जज्ञे च यद्गोत्रभिदत्र चित्रम् ॥ २३ ॥ कुमारः पुरा रक्षितः कण्टकौघैः समाच्छाद्य हृद्याशयेनैष येन । तमेवार्प्पयित्वा वरं ग्राममस्मै चकाराङ्गरक्षाकरं तं वरेण्यः ॥ २४ ॥ चारुचौलुक्यवंशाम्बरे भास्करः श्रीकुमारः स्वयं दिग्जयं क्लृप्तवान् । भूरिभूपालमालानिषेव्यक्रमः पालयामास

राज्यं क्रमेण क्रमी ॥ २५ ॥ अनुकलं कलयन्नवमङ्गलं दलितवान् सबलं सकलद्विपम् । शकलयन् कलिकल्मषमुल्बणं निजकुलं विमलं विदधेऽधिकम् ॥ २६ ॥ उदयनमथ तेने मन्त्रिणं तन्त्रविज्ञो निजमनसि दधानस्तस्य पूर्वोपकारम् । अभिविदितचरित्रे वाग्भटे मन्त्रिपुत्रे निहितविषयभारोऽसौ सिषेवे सुखौघम् ॥ २७ ॥ सततसुरवाशक्तश्रोत्रः सुदर्शनदर्शनोद्यतमतिरसौ गन्धज्ञानेऽनिशं मधुपोपमः। ललितललनाभोगाभोगं भजन् सुभगाग्रणीर्विषयविषयं सौख्यं दक्षो नृपो बुभुजे मुदा॥२८॥

॥ इति श्रीकुमारपालचरिते तृतीयसर्गे प्रथमो वर्गः ॥

---

अथो सदा श्रीकुमरः सभायामास्ते निरस्तारिबलः सलीलम् । तत्पादसेवां रचयन्ति भूपाः सर्वेऽपि सेवावसरे समेत्य ॥ १ ॥ आस्थानसंस्थे नृपतौ स कृष्णो जायाग्रजे नर्म्म करोत्यजस्रम् । एकान्तदेशे बहुमानपूर्वं निवारितः श्रीकुमरेण नास्थात् ॥ २ ॥ दोदूयते मद्वचसाधुनैष स्मरत्यवस्थां न पुरातनीं ताम् । सदा कुमारस्य स मर्तुकामश्चक्रेऽवहेलां निजलीलयेति ॥ ३ ॥ विवेद यन्नो वनिता हि भूपाः कस्यापि वश्या न भवन्त्यवश्यम् । श्रीमान् कुमारोऽप्यवहेलकं तं गूढाङ्गितोऽस्थात्किल हन्तुमिच्छन् ॥ ४ ॥ सभास्थितस्याथ नृपस्य कश्चिल्लसन्महीशावलिशालितस्य । उपायनेऽपायविमुक्तमूर्त्तेश्चक्रे करालं करवालमेकम् ॥ ५ ॥ स्वपाणिना तज्जगृहे कृपाणं पश्यत्सु सर्वेषु जनेषु राजा । स्तम्भे सभायाः स ददत्प्रहारं तस्थौ स्वयं यावदयं विमृश्य ॥ ६ ॥ तावत्समागत्य कुमारमूचे कालाहृतः कृष्णभटो विहस्य । कथं विलम्बं कुरुषे नरेश ! देहि प्रहारं जहि कातरत्वम् ॥ ७ ॥ जगाद भूपः स्थिररूप एष विरूपभीत्या निहतो मया नो । विरूपभीतिर्वणिजां न

राज्ञां कृष्णः सितेनेति पुनर्जजल्प ॥ ८ ॥ अस्त्वेवमेवं निगदन्नरेशोऽलुनाच्छिरस्तस्य शितासिना सः । कृतान्ततुल्यं तमवेत्य सर्वः सभाजनः क्षोभमवाप बाढम् ॥ ९ ॥ आज्ञाभङ्गं यः करिष्यत्यजस्रं तस्मै शिक्षामेष दास्याम्यजस्रम् । क्रूराकारः स्फाररोषारुणाक्षः संसद्येवं त्रासयामास भूपः ॥ १० ॥ दृष्ट्वा धृष्टं मारितं सैन्यनाथं जातातङ्को राजवर्गो निसर्गात् । आज्ञालोपं कोपिनो कोऽपि नोऽरं तेने मेने शासनं चास्य नित्यम् ॥ ११ ॥ सभास्थितस्याथ नरेश्वरस्य सोलाभिधो गायनचक्रवर्त्ती । अदर्शयद्गीतकलां स्वकीयां कलाकलापाम्बुनिधिर्विधिज्ञः ॥ १२ ॥ तस्मै तदानन्दितचित्तवृत्तिः सषोडशं द्रम्मशतं ददौ सः । अवज्ञया तत्सकलं शिशुभ्यः स दत्तवान् सोलकविर्मदान्धः ॥ १३ ॥ विज्ञातवृत्तो नृपतिः क्षणेन व्यवासयत्तं निजदेशमध्यात् । गत्वा स काशीं जयचन्द्रभूपं शिश्राय निश्रागतविज्ञचक्रम् ॥ १४ ॥ सन्तोषितस्तत्कलया गजेन्द्रं ददौ नरेन्द्रः स विशोफयुक्तम् । उपायने तद्विदधे समेत्य सर्वं कुमाराय स मुक्तगर्वः ॥ १५ ॥ तुष्टस्ततोऽसौ कुमरः स्वद्रङ्गं तमानयद्गानविदं गतेर्ष्यः । पानीयरेखासदृशोऽत्र लोके सन्मत्सरः स्यात्क्षणदृष्टनष्टः ॥ १६ ॥ बम्बारवं केऽपि विधाय बाढं तं गायनाः प्राहुरिदं सदन्तः । त्वदीयदेशे मुषिता इदानीं वयं विशोध्यार्पय तन्नरेश ! ॥ १७ ॥ कैरेवमुक्ते कुमरेण भूयो राजन् ! मृगौघैरिति तेऽप्यवोचन् । गान्धर्वकौशल्यकिरो गिरस्ता मत्वा नृपः सोलमुखं त्वपश्यत् ॥ १८ ॥ अदोऽवदत्सोलकविर्भवन्तस्तान् दर्शयध्वं निजतस्कराञ्शः । यथा समादाय वयं स्वशक्त्या समर्पयामस्तदिहाखिलं वः ॥ १९ ॥ ओमित्युदित्वा किल गायनास्तेऽगमन्नरण्यं सह तेन वेगात् । अदर्शयन्नस्य पुरो विलोलान्मृगान् हिरण्याभरणावृताङ्गान् ॥ २० ॥ प्रारब्धवांस्तत्र तथा स गातुं सोलः स्थिराङ्गो मधुरस्वरेण । आकर्णयन्तो हरिणा यथैयुः शनैः शनैस्तेऽतनुना-

दलीनाः ॥ २१ ॥ गायन्नगादेष यथा यथा स्वं पुरं परं विस्मयमादधानः । मृगाः सुगीतामृतनादलीनास्तथा तथाजग्मुरवश्यचित्ताः ॥ २२ ॥ मृगान् समानीय पुरे स मानी गायन्नगाद्राजसभां क्रमेण । आकर्णयन्तो विविदुर्न किञ्चित्ते गीतमङ्गीकृतहृद्यनादाः ॥ २३ ॥ स विस्मयं प्राप समग्रपौरैः समं नरेशस्तदवेक्ष्य चित्रम् । ते तत्र तस्थुर्मधुरं पिबन्तो गीतामृतं निश्चलसर्वगात्राः ॥ २४ ॥ योगीश्वराणामिव निश्चलानां तेषां निरुद्धेन्द्रियवर्त्मनां सः । तद्भूषणं स्वर्णमयं रयेण जग्राह कण्ठादशठस्वभावः ॥ २५ ॥ यथागतं शीघ्रमगुर्मृगास्ते तस्मै ददौ दानममानसीशः । अहो ! कलागीतरसोऽयमुच्चैरेवं प्रशंसां बहुधा व्यधाच्च ॥ २६ ॥ इतोऽधिकं किं वरिवर्त्ति किञ्चिन्नादस्य माहात्म्यमहो ! महीयः । स विस्मितस्तत्कलया मलान्तः पप्रच्छ सोलं नृपतिर्विहस्य ॥ २७ ॥ ततः समानीय विशुष्कशाखां स चूतवृक्षस्य सभासमक्षम् । आरोपयन्नव्यमृदालवालं नृपाङ्गणे तत्र विधाय धन्यः ॥ २८ ॥ ततः सोलो गीतं सुगतिचतुरो ग्राममधुरं स्फुरत्तानामानं स्वरगुरुतरं तारमतनोत् । यदाकर्ण्य क्ष्मापोऽमृतमतरसा स्वादसरसं परान्मेने प्रीतो विषमविषतुल्यान् स विषयान् ॥ २९ ॥ कथं क्षोणीचक्रं भ्रमति किमु मेघोऽमृतरसैर्विधत्तेऽयं वृष्टिं किमुत रतिचेतो निजमदः । अतुच्छा मूर्छेयं किमुत किमयं मोहमहिमा चिरं निःस्पन्दाक्षः क्षितिपतिरभूच्चेति विमृशन् ॥ ३० ॥ निपीते गीतेऽस्मिन् श्रवणसुखदे व्याप्तवपुषः स्फुरद्रोमाञ्चेनाजनिषत जना नाद्भुतमिदम् । विशुष्को यच्चूतश्चिततनुरभूत्पल्लवभरैः फलैः पूर्णश्चासीत्तदिह ननु चित्रं महदिदम् ॥ ३१ ॥ माकन्दं फलितं विलोक्य मुदितस्तद्गीतगीतामृतैस्तस्मै विस्मितमानसोऽद्भुततरं दानं कुमारो ददौ । दत्त्वा हस्तिवरं च चामरयुगं सम्मानपूर्वं तदा गन्धर्वाधिपतिं चकार चतुरः सोलं विशल्याशयः ॥ ३२ ॥

सङ्गीतनृत्यसुरतोत्सवविज्ञगोष्ठीदोलाधिरोहजलकेलिमुखैर्विनोदैः । सर्वार्थिसार्थसुरवृक्षसमानरूपो भूपो दिनानि स बहूनि निनाय हृष्टः ॥ ३३ ॥

॥ इति श्रीकुमारपालचरिते तृतीयसर्गे द्वितीयो वर्गः ॥ ग्रन्थाग्रं ५९ ॥

---

अन्यदा कुमरभूपसभायां कुङ्कुणेशमलिकार्जुनराज्ञः । मागधो नृपपितामहनाम विश्रुतं स्तुतिपदं निजगाद ॥ १ ॥ तन्निपीय नृपतिर्गुरुरोषात्सम्मुखं स्वसदसोऽथ ददर्श । तावतोदयनमन्त्रितनूज आम्बडस्तमवदन्नतिपूर्वम् ॥ २ ॥ किं नरेश ! कुरुषे गुरुरोषमेतदर्थमरिशोषिततोषम् । आदिश त्वमिह मामहितं तं यामि जेतुमतिगर्वितचित्तम् ॥ ३ ॥ तं स्तुवन्नतितरां निजचित्तवेदिनं दिनपतिप्रतिमः सः । प्राहिणोन्निहतशत्रुसमूहं तत्र पुत्रसदृशं सह सैन्यैः ॥ ४ ॥ पूरयन् दशदिशः स्वबलौघैश्चूरयन्नरिभरं पथि सोऽगात् । कुङ्कुणं विगणितापरशक्तिराम्बडः कृतनृपोत्तमयुक्तिः ॥ ५ ॥ तं समेतमवगत्य समागात्सम्मुखं स मलिकार्जुनभूपः । मानिनो हि ददते निजदेशे न प्रवेशमिह वैरिजनस्य ॥ ६ ॥ सङ्गरं गुरुतरं वरवाजिदन्तिपत्तिशतमारणमासीत् । सैन्ययोरुभययोरनुभग्नं मन्त्रिसैन्यमगमल्लघुदूरम् ॥ ७ ॥ नष्टमात्मकटकं स विलोक्यापासरत्सचिवराट् समयज्ञः । तावता रणभुवं स विशोध्यागात्पुरं विजयवानरिभूपः ॥ ८ ॥ लज्जितः स्वकटकेन समं द्रागाम्बडो निजपुरोपवनान्ते । एत्य दुःस्थितमनाः स्थितवान् स दर्शयन्निजमुखं न जनानाम् ॥ ९ ॥ तस्य मानमसमानमवेत्य मानिनामधिपतिर्धरणीशः । भूरिवीरपरिवारसमेतं प्राहिणोत्पुनरिमं रिपुदेशे ॥ १० ॥ क्रान्त्वा सर्वं कुङ्कुणं

वाहिनीनां तीर्त्वा वृन्दं मन्दमन्दं स गच्छन् । सोपाराख्यं पत्तनं मन्त्रिराजो राजद्राजभ्राजितं स प्रवेदे ॥ ११ ॥ मन्त्री तस्थौ पत्तनोद्यानदेशे युक्त्या सैन्यं स्थापयित्वा स्वकीयम् । वीतातङ्कं कुङ्कुणेशाय तस्मै सद्यो दूतं प्रेषयामास दक्षम् ॥ १२ ॥ तं जगाद मृदुवाक् स्वसदःस्थं नीतिवित्स नृपतिं प्रणिपत्य । आगतं कुमरपालनिदेशात्तोषयैव सचिवं नृप! भक्त्या ॥ १३ ॥ प्राग् जितोऽयमिति चेतसि दर्पं मा कृथा सुखविनाशनसर्पम् । निर्जितोऽपि मदनः किमु शम्भुं रंहसा निजवशं न चकार ॥ १४ ॥ नो महापुरुषविग्रहं जना मण्डयन्ति विबुधाः कदाचन । तं विधाय हतधीः सुयोधनो वंशनाशमसृजन्मदान्धलः ॥ १५ ॥ तद्भवानपि विचार्य भूपते ! मन्त्रिणा सह विधेहि सौहृदम् । कोशदेशपृतनाधिकेन नो विग्रहं बुधजनाः प्रकुर्वते ॥ १६ ॥ इतीरयित्वा वचनं वदान्यो राज्ञः पुरस्ताद्विरराम दूतः । रोषारुणाक्षः क्षितिपस्तदानीं दत्त्वापमानं विससर्ज तं च ॥ १७ ॥ जीवन्मुक्तोऽयं वराको मया प्राक् प्राप्तो भूयो निश्चितं मर्तुकामः । ध्यायन्नित्थं मानसे भूमिनाथो सोऽभ्युत्तस्थे भूपसार्थेन सार्द्धम् ॥ १८ ॥ श्रीपुञ्जाख्यो देवदत्तोऽस्ति हारस्तस्य स्यान्नो कण्ठगे यत्र मृत्युः । गर्वावेशान्मन्त्रिणं जेतुकामः क्षोणीनाथस्तं विसस्मार सारम् ॥ १९ ॥ पटः पटिष्ठो वरिवर्त्ति देहरक्षाकरस्तस्य समुद्रदत्तः । रोषान्धलः क्षोणिपतिस्तदा तं जग्राह नो विग्रहबद्धबुद्धिः ॥ २० ॥ भज्यन्तेऽन्ये दन्तिनो यस्य गन्धात्तस्यास्त्येको बन्धुरः सिन्धुरेशः । योद्धुं वाञ्छन् मन्त्रिणा सार्द्धमिद्धं भूपोऽगच्छत्तं समारुह्य भद्रम् ॥ २१ ॥ संग्रामार्थं गच्छतस्तस्य राज्ञो भम्भारावाकारितः सारवीर्यः । अन्वागच्छन्निर्विलम्बं भटौघोऽकुण्ठोत्कण्ठोऽलं जयश्रीं वरीतुम् ॥ २२ ॥ निःसंख्येनोत्संख्यकामेन विष्वक्सैन्येनासौ वेष्टितो भूमिपालः । स्फूर्जत्स्वोर्जस्त्रासितारातिजातस्तत्रायातोऽभात्कृतान्तोपमेयः ॥ २३ ॥

आलोक्यारान्मन्त्रिराट् तं समेतमारुह्योच्चैर्हस्तिनं प्रत्यधावत् । विश्वां विश्वां व्यापयन्नात्मसैन्यैर्यद्वद्दर्पात्पन्नगं वैनतेयः ॥ २४ ॥ पूर्णं पूर्णं काहलानां निनादैर्युद्धारम्भे व्योम सैन्यद्वयस्य । दुग्धं दुग्धान्तर्गतं लक्ष्यते नो यद्वत्तद्वत्सैन्ययुग्मं तदासीत् ॥ २५ ॥ वाहो वाहं स्यन्दनी स्यन्दनस्थं नागो नागं पत्तिरेयाय पत्तिम् । अङ्गेनाङ्गं साभजद्भूरिरागादित्थं सेना स्वप्रियस्येव शत्रोः ॥ २६ ॥ मुञ्चत्येके चाट्टहासान् भटौघा नश्यन्त्येके कातरा राववन्तः । तन्वन्त्येके युद्धमिद्धोद्धताङ्गाः पश्यन्त्येके पातितानात्मनैव ॥ २७ ॥ नृत्यन्त्येके छिन्नशीर्षा रणोर्व्यां धावन्त्येके सम्मुखं विद्विषां च । गच्छन्त्येके तत्र मूर्छामतुच्छां योधान् केचिन्नश्यतोऽथाह्वयन्ते ॥ २८ ॥ खड्गाखड्गि क्रोधतः केऽपि युद्धं मुष्टामुष्टि ध्वस्तशस्त्रास्तथैके । दन्तादन्ति छिन्नहस्ताश्च केचित्केशाकेशि द्वन्द्वमातेनुरन्ये ॥ २९ ॥ चक्रुः क्रीडां स्वक्रमोत्क्षेपितेन शीर्षेणैके कन्दुकेनेव वीराः । केचित्स्वान्त्रैर्दन्तिदन्ताग्रलग्नैर्दोलाकेलिं तत्र युद्धे वितेनुः ॥ ३० ॥ बाणैः प्राणान् केऽपि गृह्णन्ति तत्र कीलालौघानुत्तृषोऽन्ये पिबन्ति । ऊर्ध्वं केचित्क्षेपिता दन्तिवृन्दैर्दिव्यस्त्रीणां त्रासमुत्पादयन्ति ॥ ३१ ॥ नष्टान् भट्टा वालयन्ति स्म तत्र कीर्त्तिस्फूर्त्या धीरतामादधानाः । केचिद्गाढं हक्किताः सैन्यनाथैर्भूयोऽकार्षुः सङ्गरं भग्नचित्ताः ॥ ३२ ॥ रक्तं व्यक्तं नीरतामाप भूरि कृत्तान्यापुर्मस्तकान्यब्जतां च । शस्त्राण्युच्चैर्मत्स्यतां तत्र केशाः शेवालत्वं सिन्धुतां युद्धभूमिः ॥ ३३ ॥ एवं युद्धे जायमानेऽसमाने घातैर्भिन्नं तद्बलं यावदासीत् । तावद्भूपं कालरूपं पुरस्तात्प्राप्तं वीक्ष्यापासरन् मन्त्रिसैन्यम् ॥ ३४ ॥ कांश्चित्पादैर्मुष्टिघातेन कांश्चित्कांश्चिच्छस्त्रैस्ताडयन्नाम्बडोऽथ । नष्टं दृष्ट्वा वैरिणो गन्धहस्तिगन्धात्सैन्यं सिंहनादं मुमोच ॥ ३५ ॥ श्रुते तस्मिन् नादे रिपुभटघटा दूरमगमद्दिगन्तं मातङ्गा अगुरगसमाना अपि समाः । चकम्पे भूकम्पं गुरुशिखरिणो

बाढगभजन् निजैः सार्द्धं राजा समजनि तदा खिन्नवदनः ॥ ३६ ॥ निरीक्ष्य क्ष्मानाथं गतपरिकरं शोकविधुरं समेत्यारादेवं सचिवतिलको वाक्यमवदत् । परित्यक्त्वा मानं कुमरनृपतेः पादयुगलं प्रणम्येदं राज्यं भज भज वृथा मा मृतिमहो ! ॥ ३७ ॥ श्रुत्वा वाक्यं मन्त्रिणोऽतीवरुष्टो दष्टोष्ठो द्राग् भूपतिस्तं बभाषे । इत्थं व्यर्थं जल्पतो रेऽधुना ते जिह्वाछेदेमाशु दण्डं करिष्ये ॥ ३८ ॥ रे रे नष्टं नास्ति तेऽद्यापि किञ्चिन्मुक्त्वा सर्वं याहि देशं स्वकीयम् । मय्यत्यर्थं कालरूपेऽद्य रुष्टे स्पर्द्धावृद्धे जीवितं ते विनष्टम् ॥ ३९ ॥ कोऽस्मिंल्लोके वज्रपातं सहेत बाहुभ्यां वा लङ्घयेत्को महाब्धिम् । तद्वद्देवो दानवो मानवो वा कः संग्रामे मत्प्रहारान् सहेत ॥ ४० ॥ आकर्ण्येदं कर्णशूलोपमेयं राज्ञो वाक्यं स्फूर्तियुक्तं नितान्तम् । तन्वन् हास्यं धन्विनामेष धुर्यो धुन्वन् शीर्षं मन्त्रिराजो जगाद ॥ ४१ ॥ निःसारस्य स्याद्यथा वस्तुनो वै स्फूर्तिर्लोके स्यात्तथा नेतरस्य । यादृक् कांस्येऽनिष्टवंशे निनादस्तादृक् स्वर्णे वर्ण्यवर्णे न च स्यात् ॥ ४२ ॥ नाहं नाहं नाहमित्याननास्यो ब्रूते वाजी राजवाह्यः सुतेजाः । हंहंहंहंहंहमित्यूर्द्ध्ववक्त्रो गाढं गाढं रासभो रारटीति ॥ ४३ ॥ भूयो भूयः कल्पितैर्जल्पितैः किं स्वोक्तं राजन् ! दर्शयास्माकमेतत् । इत्युक्तोऽसौ सिन्धुरस्कन्धसंस्थः क्रोधेनान्धो मन्त्रिणं प्रत्यधावत् ॥ ४४ ॥ रुष्टः श्रीमानर्जुनः सोर्जुनाभो मुञ्चन् बाणान् प्राणसंहारिणोऽरम् । एकोऽनेकैर्व्याकुलं मन्त्रिसैन्यं चक्रे वक्रं चापमुच्चैर्दधानः ॥ ४५ ॥ मुक्त्वा रोपान् कोपवान् मन्त्रिपुत्रश्चिच्छेदासौ वैरिणः पत्रिणस्तान् । कीर्त्त्या साकं कङ्कपत्रेण धात्र्यां शत्रोश्छत्रं पातयामास पश्चात् ॥ ४६ ॥ वर्षन्वर्षाम्भोदवन्मार्गणौघैर्भूयो भूयो व्यापयन् स्वर्गमार्गम् । कृत्वा श्यामं मानसं तस्य राज्ञस्तूर्णं पूर्णां वाहिनीमेष तेने ॥ ४७ ॥ अजनि जनितकम्पं द्वन्द्वयुद्धं तयोस्तदिति नवनवशस्त्रैरस्त-

धारावलिप्तैः। असुरसुरनरेशा यन्निरीक्ष्योद्धताङ्गा अनणुरणरसौघाद्भेजिरे शौर्यवृत्तिम् ॥ ४८ ॥ तयोरेवं युद्धोद्धतमतिभृतोः शौर्ययुतयोर्वपुः पूर्णं स्वेदोदककणगणैर्दारुणरणात् । क्षणं क्षोणीनाथे क्षणमपि पुनर्मन्त्रिमुकुटे गतायातं तेने विजयकमलात्यन्तचपला ॥ ४९ ॥ महामात्यस्येभं नृपतिरवधीत्तीक्ष्णविशिखैः पपातायं भूमौ सह सचिवहर्षेण सहसा । जितं भूपेनेदं मुदितमनसस्तस्सविधगा वदन्त्युच्चैर्यावत्सचिववधबुद्ध्युद्धुरनराः ॥ ५० ॥ असमरसवशेनोत्पत्य तावत्स मन्त्री नृपतिगजमियाय प्रायसं रक्षिताङ्गः। अनणुरणरसात्तं पातयित्वा नरेशं निजकरकरवालेनैष चिच्छेद शीर्षम् ॥ ५१ ॥ निजभुजबलेनायं भूपं निहत्य मदोत्कटं स्फुटपटुरवान्वादित्रौघानवादयदञ्जसा । तदनु विषये संस्थाप्याज्ञां कुमारमहीपतेर्नृपतिशिरसा सर्वं लात्वा सह स्वपुरं ययौ ॥ ५२ ॥ ददद्दानं मन्त्री मुदितहृदयो मङ्गलमयं विवेशोच्चैः क्लृप्तोत्सववरतरं पत्तनमसौ । ततः प्रातः प्रौढां नृपशतयुतां भूपतिसभां पुरो मुक्त्वा शीर्षं प्रणतिमतनोदुत्तमतमः ॥ ५३ ॥ शिरो दृष्ट्वा राजा व्यथितहृदयः कुङ्कुणपतेः परित्यक्त्वा छत्रप्रभृतिकमलं शोकमतनोत् । पुनः शीर्षं प्रादात्स निजविषये तत्र सचिवस्तदानीतं वित्तं नृपतिपुरतोऽढौकयदिदम् ॥ ५४ ॥ द्वात्रिंशत्स्वर्णकुम्भा अतिविशदरुचां मूढको मौक्तिकानां दिव्यो हारश्च हेम्नां रुचिररुचिभृतां कोटयो विश्वसंख्याः। हस्ती श्वेतः पटः स प्रकटमतिभृतां वारवध्वां शतानि पञ्चोच्चैर्वाजिनां चायुतमतिरुचिरा दन्तिनां पष्टिरन्या ॥ ५५ ॥ तदखिलमपि दृष्ट्वा ढौकितं मन्त्रिणाग्रे कुमरनृपतिरापद्विस्मयं मानसान्तः। निखिलनृपसमक्षं मन्त्रिराजाय तस्मै द्विरदमथ तदीयं दत्तवान् मानपूर्वम् ॥ ५६ ॥ विमलमङ्गलराजिविराजितः स्वसदनं स जगाम नृपैर्युतः। स्वजननीं च ननाम नयोज्ज्वलः प्रमुदितः किल राजपितामहः ॥ ५७ ॥ श्यामास्यां तां मातरं मन्त्रि-

राजो दृष्ट्वाऽपृच्छत्कारणं वारितारिः । शश्वच्छीलालङ्कृताङ्गी कुलीना स्वच्छा वत्सं सा जगादेति दक्षा ॥ ५८ ॥ निजकलकुलतुल्यं कर्म्म किञ्चित्त्वया नाचरितमचिरकालाज्जायते येन सिद्धिः । भवति नरकपातः कर्मणा येन लोके तदखिलमपि तेने तेन मे दुःखमेतत् ॥ ५९ ॥ अमृतरससमानं मातुराकर्ण्य वाक्यं तदनु स भृगुकच्छेऽचीकरच्चैत्यमुच्चैः । अनुदिनघनदानैः प्रीणयन् सर्वलोकं नृपतिपरशरीरं मन्त्रिराजो बभूव ॥ ६० ॥ इति नृपतिनिदेशादाम्बडो मन्त्रिराजो निजभुजविजितारिर्दिग्जयं द्राग् वितेने । नतनृपशतमौलिव्रातधौतक्रमाब्जः सुखमतिसुखमायुक् श्रीकुमारः सिषेवे ॥ ६१ ॥ श्रीरत्नसिंहगुरुपादसरोरुहालिश्चारित्रसुन्दरकविर्यदिदं वितेने।श्रीमत्कुमारचरितस्य हि राज्यनामा सर्गः समाप्तिमगमत्सुगमस्तृतीयः ६२

इति भट्टारकश्रीरत्नसिंहसूरिशिष्योपाध्यायश्रीचारित्रसुन्दरगणिविरचिते श्रीकुमारपालचरिते महाकाव्ये राज्याभिषेकवर्णनो नाम तृतीयः सर्गः ॥ ग्रन्थाग्रं ९२ समस्तसर्गे १८७ ॥

---

## ॥ अथ चतुर्थः सर्गः ॥

श्रीहेमचन्द्रसूरीन्द्रा अन्यदेन्द्रगुरूपमाः । स्वमात्रे पाहिणीनाम्न्यै पत्तनेऽनशनं ददुः ॥ १ ॥ नानापुण्यधनं धन्यास्तस्यै शस्याशया ददुः । श्राद्धाः श्रद्धोद्धुरास्तत्र विदधुर्विविधोत्सवान् ॥ २ ॥ तस्याः समाधिना पूर्णेऽनशने दिवसैस्त्रिभिः । विमानं रचयांचक्रुर्भव्यं भव्यजनास्तदा ॥ ३ ॥ विधिवत्सर्वकृत्येषु कृतेषु सुकृतोत्तमाः । चेलुः श्राद्धास्तदादाय महोत्सवपुरस्सरम् ॥ ४ ॥ मठेति पुरुषस्याथ जटाधारिभिरुत्कटैः । श्राद्धानां गच्छतां मार्गे विवादः सुमहानभूत् ॥ ५ ॥ वण्ठमा-

रैर्जटाभृद्भिर्निशुरैर्दुष्टचेष्टितैः । अभज्यत विमानं तत्साभिधानं कुबोद्धतैः ॥ ६ ॥ वृत्तं श्रुतिकटु श्रुत्वा तदशो दूनमानसाः । संजातात्यन्तसन्तापाः सूरयोऽचिन्तयन्निदम् ॥ ७ ॥ जैनधर्मद्विषो दुष्टान् सङ्घविघ्नविधायिनः । जिनाज्ञाराधकः साधुः स्वशक्त्या वारयेदिह ॥ ८ ॥ उपेक्षते स्वसामर्थ्ये सति यस्तान् पुनर्नरः । बम्भ्रमीति भवे घोरे स जिनाज्ञाविराधकः ॥ ९ ॥ तदहं भूपसङ्गत्या गत्यागतिविचक्षणः । सर्वान् धर्मद्विषो वेगाद्वारयिष्ये स्वशक्तितः ॥ १० ॥ आत्मप्रभुतया स्वामिप्रसादेनाथवा नृणाम् । सिध्यन्ति सर्वकार्याणि नास्त्युपायः परः पुनः ॥ ११ ॥ उपकारोऽपकारो वा यस्य व्रजति विस्मृतिम् । पाषाणसुहृदस्तस्य जीवतीत्यभिधा मुधा ॥ १२ ॥ विचार्य सुचिरं चित्ते जानन्तः सिद्धिमायतौ । शासनोत्सर्पणां कर्तुं तेऽगमन्नृपपर्षदम् ॥ १३ ॥ श्रीमानुदयनामात्यः पुरो गत्वातिसत्वरम् । मुनीशागमनं राज्ञे ज्ञापयामास तत्क्षणम् ॥ १४ ॥ स तान् समागतान्मत्वा राज्यप्राप्तिप्रकाशकान् । मुदितो मन्त्रिणं प्रेष्याकारयामास सादरम् ॥ १५ ॥ अमात्येन समं देवामात्यतुल्यास्तदेत्य ते । आशीर्वादं वदान्याय नृपायेति ददुर्मुदा ॥ १६ ॥ यो मारयन्मारमरं विभूतिं बिभ्रद्भवानीहितकारकश्च । आदीश्वरो भूतपतिर्नृपाङ्कः स त्वामहीनाभरणः पुनातु ॥ १७ ॥ इत्याशीर्वादनैर्विद्याद्दर्जितो रसनापतिः । आस्यतामासनेऽमुष्मिन्निति पूर्णमदोऽवदत् ॥ १८ ॥ उपाविशन्नृपादिष्टे विष्टरे सूरिसत्तमाः । कुशलप्रश्नमातेने मुदितो नृपतिस्ततः ॥ १९ ॥ क्षमापत्योर्द्वयोः सेवां रचयन् रचिताञ्जलिः । मध्यस्थोऽसौ द्विधा मन्त्री तस्थावूर्ध्वस्थ एव सः ॥ २० ॥ चिरं विचारचातुर्यरुचिरः परयोस्तयोः । अपूर्वस्पृहयोर्जज्ञे तदा गोष्ठीरसो मिथः ॥ २१ ॥ सुधास्वादाधिकं पीत्वा धुततापं गुरोर्वचः । अपूर्णेच्छो नृपो वाक्यं तदुच्चारमिवासृजत् ॥ २२ ॥ शुभचन्द्रिर्भवद्भिर्मे प्रसादः सादह-

त्सदा । कार्यः स्वागमनेनेह श्रुत्वैवं सूरिरभ्यधात् ॥ २३ ॥ भुञ्जीमहि वरं भैक्ष्यं जीर्णं वासो वसीमहि । शयीमहि महीपीठे कुर्वीमहि किमीश्वरैः ॥ २४ ॥ जगाद भूपतिर्भूयो युष्माभिः सह सर्वदा । मैत्रीं विधातुकामोऽस्मि परत्र हितवाञ्छया ॥ २५ ॥ एवमित्युदिते भूपः प्रभूणां दूयकं ददौ । अस्खलितप्रचारार्थं विचारार्थं च सर्वदा ॥ २६ ॥ तेन तत्त्वाश्रितां वार्त्तां कृत्वा कालं कियच्चिरम् । नमतानुमता जग्मुः स्वाश्रयं सूरिसत्तमाः ॥ २७ ॥ कलावता सुवृत्तेन चन्द्रवृत्तेन सूरिणा । मुमुदे स मुनीशेन सत्सत्त्वो वाहिनीपतिः ॥ २८ ॥ सदानभोगयुक्तेन तेन राज्ञोज्ज्वलात्मना । बभार परमां प्रीतिं स गुरुर्विबुधाग्रणीः ॥ २९ ॥ शश्वद्गमागमे जाते तयोर्विद्वत्प्रधानयोः । अवर्द्धिष्टाधिकं प्रीतिः सिन्धुचन्द्रमसोरिव ॥३०॥ गच्छन्तस्तेऽन्यदा भूपपार्श्वे वीक्ष्य पणाङ्गनाम् । प्रस्तावविदुरा वेगात्पश्चाद्ववलिरे स्वयम् ॥ ३१ ॥ स तावत्तद्गुणप्रीतस्तद्वार्त्तारसिको नृपः । तां विसृज्य गुरुस्नेहाद्गुरूनाकारयद् द्रुतम् ॥ ३२ ॥ अत्रान्तरे तरत्क्रोधरुद्धबुद्धिः पुरः स्थितः । उपहासपरो बाढं पुरोधा वाक्यमब्रवीत् ॥ ३३ ॥ विश्वामित्रपराशरप्रभृतयो ये चाम्बुपत्राशनास्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः । आहारं सघृतं पयोदधियुतं ये भुञ्जते मानवास्तेषामिन्द्रियनिग्रहो बत कथं दम्भः समालोक्यताम् ॥ ३४ ॥ तच्छ्रुत्वा सूरयोऽशंसन् क्रमोऽयमविवेकिनाम् । किन्तु सत्त्ववतां राजन्नुत्तमानामयं क्रमः ॥ ३५ ॥ सिंहो बली द्विरदशाम्बरमांसभोजी संवत्सरेण कुरुते रतमेकवारम् । पारापतः खरशिलाकणभोजनोऽपि कामी भवत्यनुदिनं ननु कोऽत्र हेतुः ॥ ३६ ॥ इत्युक्तियुक्तिकुन्तेन तेन भिन्नस्तथा द्विजः । यथा निरस्तचैतन्यः स निरुत्तरतामगात् ॥ ३७ ॥ अमी सूर्यं न मन्यन्त इत्यसौ पुनरुक्तवान् । अन्यदा तत्समाकर्ण्य सूरयोऽप्येवमूचिरे ॥ ३८ ॥ अधामधामधामेदं वय-

मेव स्वचेतसि । यस्यास्तव्यसने प्राप्ते त्यजामो भोजनोदके ॥ ३९ ॥ पयोदपटलच्छन्ने नाश्नन्ति रविमण्डले । अस्तं गते तु भुञ्जानाः अहो ! भानोः सुसेवकाः ॥ ४० ॥ शाखाभ्रष्टः कपिरिव विप्रोऽस्यादुत्तरोज्झितः । नृपो मेने प्रभून् सर्वोत्तरादानविचक्षणान् ॥ ४१ ॥ जगाद सादरं सूरीनन्यदा नृपतिर्मुदा । केनोपायेन जायेत यशो जगति मे स्थिरम् ॥ ४२ ॥ अवदन् सूरयो विश्वानृण्यतो विक्रमार्कवत् । महाचैत्योद्धृतेर्वापि श्रीमद्भरतचक्रिवत् ॥ ४३ ॥ ततो नरपतिर्वित्तं दत्त्वा देवकपत्तने । शिवचैत्योद्धृतिकृते प्राहिणोन्निजपूरुषान् ॥ ४४ ॥ स वर्षैः पञ्चभिः पूर्णे जाते शङ्करमन्दिरे । यात्रार्थं नृपतिश्चक्रे सामग्रीं मुदिताशयः ॥४५॥ अन्यदा गुरुरागेण शशंस स गुरोर्गुणान् । असहिष्णुः प्रशंसां तां पुरोधाः प्रोचिवानिति ॥ ४६ ॥ राजन्नखण्डपाखण्डाः पटुचाटुपरायणाः । अमी स्वधर्मं निन्दन्ति सदा मदभृताशयाः ॥ ४७ ॥ नागमिष्यन्ति यात्रायामर्थिता अप्यमी भृशम् । भगवन्तं महादेवमेते नो मन्वते यतः ॥ ४८ ॥ प्रतारितमना भूपो विप्रैः सोऽथ प्रभून् स्वयम् । यात्रार्थमर्थयामासात्यर्थमव्यर्थधर्म्मधीः ॥ ४९ ॥ ऊचुस्ते सोद्यमा राजन् ! यात्रार्थं यतयः सदा । इष्टं वैद्योपदिष्टं चाजनिष्ट तदिदं हि नः ॥ ५० ॥ सार्थोऽयं गन्तुकामस्यामन्त्रणं क्षुधितस्य च । निर्म्ममे तीर्थयात्रार्थमस्माकं यन्निमन्त्रणम् ॥ ५१ ॥ नरयानादि किं यानं भवद्भ्यो दीयतामिह । पृष्टे नृपतिनाऽवोचन्निति ते विकसन्मुखाः ॥ ५२ ॥ निरारम्भास्त्यक्तदम्भा यात्रार्थं यतयः सदा । व्रजन्ति पादचारेण प्राणिरक्षणहेतवे ॥ ५३ ॥ प्रयच्छादेशमद्यैव नन्तुं नश्चैत्यमण्डलीम् । शत्रुञ्जयोज्जयन्तादितीर्थान्यानम्य निश्चितम् ॥ ५४ ॥ प्रवेशसमये देव ! तव देवकपत्तने । मिलिष्याम इत्युदीर्य विजह्रुः प्रभवः क्षणात् ॥ ५५ ॥ युग्मम् ॥ महता सह सैन्येन ययौ तत्र नृपः क्रमात् । ते च कृत्वा तदाऽऽजग्मु-

यात्रां शत्रुञ्जयादिकाम् ॥ ५६ ॥ जहर्ष भूपतिर्बाढं वीक्ष्य सूरीन् समागतान्। चन्द्रं सिन्धुर्घनं केकी चक्रवाको यथा रविम् ॥ ५७ ॥ अथ वहुविधदानैः प्रीणयन् याचकौघं शिवभुवनमवाप स्वाङ्घ्रिचारेण भूपः। भवमभिनवभक्तिर्व्यक्तपूजोपचारै रुचिरतरविचारोऽपूजयच्छ्रीकुमारः ॥ ५८ ॥ अमी जैनाः शम्भुं स्वमतरतयो विश्वविदितं न वन्दन्ते विप्रो नृपतिमिति कश्चिद्वदितवान्। तदुक्त्या सम्भ्रान्तो भ्रमभरहरं सूरिमवदत् प्रभो! शंभोः पूजां कुरुत यदि दोषो न भवताम् ॥ ५९ ॥ तदुदितममृताभं ते निपीयेत्यवोचन् विदधति यतयो नो द्रव्यपूजां नरेन्द्र!। तदिह दलितकामस्याभिरामस्य शम्भोर्भवतु भवसमूहच्छेदिनी भावपूजा ॥ ६० ॥ एवमेवमुदिते कुमरेण ते स्वरेण मधुरेण मुनीन्द्राः। इत्थमर्थबहुलां नतिपूर्वं सन्नुतिं विदधुरुन्नतिभाजः ॥ ६१ ॥ यत्र तत्र समये यथा तथा योऽसि सोऽस्यभिधया यया तया। वीतदोषकलुषः स चेद्भवानेक एव भगवन्नमोऽस्तु ते ॥ ६२ ॥ त्रैलोक्यं सकलं त्रिकालविषयं सालोकमालोकितं साक्षाद्येन यथा स्वयं करतले रेखात्रयं साङ्गुलिम्। रागद्वेषभयामयान्तकजरालोलत्वलोभादयो नालं यत्पदलङ्घनाय स महादेवो मया वन्द्यते ॥ ६३ ॥ भवबीजाङ्कुरजनना रागाद्याः क्षयमुपागता यस्य। ब्रह्मा वा विष्णुर्वा हरो जिनो वा नमस्तस्मै ॥ ६४ ॥ गुरुरिति निरवद्यैर्हृद्यपद्यैर्वितेने स्तवमभिनवमेवं शृण्वति श्रीकुमारे। तदनु मनुजनाथाकारितो वारितैना अभजदतिमनोज्ञं विष्टरं मण्डपान्तः ॥ ६५ ॥ श्रीमच्छ्रीकुमरोऽमरेशसदृशस्तत्रोपवेश्यासनेऽदादानन्दवशात्तुलाप्रभृतिकं दानं दयातत्परः। चञ्चत्पञ्चनिनादसुन्दरतरं पश्चादतुच्छोत्सवं चैत्येऽसावकरोच्चिरं नरपतिव्रातैर्वृतः सद्व्रतः ॥ ६६ ॥

॥ इति श्रीकुमारपालचरिते प्रतिबोधसर्गे प्रथमो वर्गः ॥

अथो स कार्याण्यखिलानि कृत्वा तस्थौ क्षणं स्वस्थमना नरेशः। विचार्य किञ्चित्सुचिरं हृदन्तर्जगाद सूरिं मृदुना रवेण ॥ १ ॥ देवो महादेवसमोऽपरो नो भवत्समो नो भगवन्महर्षिः। न तत्समोऽन्यो नृपतिस्त्रयाणां संयोग एषोऽजनि सत्तमानाम् ॥ २ ॥ तदत्र तत्त्वं मुनिनाथ! सार्थं प्रकाशय प्रापितमुक्तिसार्थम्। जायेत पुण्यैः प्रगुणैर्विना नो योगः सतां दत्तसमाधिभोगः ॥ ३ ॥ राज्ये परे सत्यपि यस्य बुद्धिः समीहते सिद्धिमहो! नरेश!। धन्योऽसि राजन्निति तं स्तुवन् स जगाद सूरिर्मुदितो नितान्तम् ॥ ४ ॥ कृतं पुराणोक्तिभिरत्र राजन्! प्रत्यक्षमेनं करवाणि शम्भुम्। जानातु तत्त्वं किल तन्मुखेन भवान् भवच्छेदकरं सुखेन ॥ ५ ॥ अहं करिष्येऽद्य हरस्य जापमुत्क्षेपणीयो भवता च धूपः। प्रत्यक्षमागत्य यथातितुष्टः पिपर्त्ति वाञ्छां तव तूर्णमीशः ॥ ६ ॥ क्षमापती ओमिति तौ भणन्तौ स्वस्वोपचारोपयुतौ रजन्याम्। पवित्रगात्रौ विजने प्रयातौ शम्भोर्गृहान्तः कृतसर्वकृत्यौ ॥ ७ ॥ घ्राणाग्रसंयोजितदृष्टिरिष्टबद्धासनः कामरिपोः पुरस्तात्। शिक्षां समादिश्य नृपाय सर्वां ध्यानं वितेने व्रतिनामधीशः ॥ ८ ॥ उत्क्षेपयामास विशुद्धवासाः संवासिताशेषदिशं विशङ्कः। कृष्णागुरुं तत्र गुरोः पुरस्तात्कर्पूरपूरेण युतं क्षितीशः ॥ ९ ॥ प्रकुर्वतोः कृत्यमिति स्वकीयं तयोर्निशीथः स्थिरयोर्बभूव। लिङ्गोपरिष्टादतिदीप्यमानं तमोहरं ज्योतिरथाविरासीत् ॥ १० ॥ किमैन्दवं भानुभवं किमेतज्ज्योतिर्जगल्लोचनदुर्निरीक्ष्यम्। विचिन्तयन्नित्थमसौ नरेशस्तदन्तरेकं मुनिमैक्षतैषः ॥ ११ ॥ चन्द्रावतंसं भुजगोपवीतं तमर्द्धनारीवपुषं निरीक्ष्य। स्फुरज्जटाजूटविराजमानं विसिष्मियेऽसौ सहसा नरेशः ॥ १२ ॥ पश्यन् दृशानन्दमयैकमूर्तिं मत्वा महेशं स्वयमागतं तम्। कुर्वन् प्रणामं मुदितो नितान्तं कृताञ्जलिः प्राह स साहसीशः ॥ १३ ॥ अहो! कृतार्थे

तत्त्वं भवच्छेदकरं गदित्वा तत्त्वं कृतार्थे श्रवसी विधेहि ॥ १४ ॥ अथावि-
नयने अभूतां शम्भो ! भवद्रूपनिरूपणेन । तत्त्वं भवच्छेदकरं गदित्वा तत्त्वं कृतार्थे श्रवसी विधेहि ॥ १४ ॥ कलौ युगे-
रासीदिति गीरमूर्त्ता राजन्नयं देवमयो मुनीशः । अपारसंसारसमुद्रपारं त्वयाप्तुकामेन सदा निषेव्यः ॥ १५ ॥ कलौ युगे-
ऽस्मिन्नयमेव धत्ते सर्वज्ञसाम्यं शमिनामधीशः । तत्त्वं भवच्छेदकरं रयेण तदस्य वाचा त्वमवेहि राजन् ! ॥ १६ ॥ आ-
दिश्य राजानमिदं महेशस्तिरोऽभवत् स्वप्न इवैष वेगात् । पूर्णं विधायाथ जपं मुनीशः क्षणेन राजन्निति वाक्यमूचे ॥१७॥
जीवादिशेत्यादि वदन्महीशः संवाहयामास पदं स सूरेः । आजीवितं तत्र मुमोच मद्यमांसाद्यभक्षाणि स शम्भुसाक्षम्
॥ १८ ॥ क्रमात्समेतो नृपतिः पुरं स्वं श्रुत्वागमं सूरिमुखात्समग्रम् । व्रतानि सम्यक्त्वयुतानि सूर्यसंख्यानि जग्राह
विशुद्धबुद्धिः १९ ॥ श्रीयोगशास्त्रप्रमुखान् प्रबन्धान् त्रिषष्टिपुंसां चरितानि चायम् । प्रभोर्मुखान्निश्चलचित्तवृत्तिः शुश्राव
सुश्रावकचक्रचक्री ॥ २० ॥ द्यूतं च मांसं च सुरा च वेश्या पापर्द्धि चौरी परदारसेवा । एतानि सप्त व्यसनानि राजन् !
घोरातिघोरं नरकं नयन्ति ॥ २१ ॥ श्रुत्वा स इत्थं व्यसनानि सप्त तत्याज निर्व्याजमतिः क्षितीशः । व्यवासयद्दुर्जरदे-
शमध्याद् ज्ञात्वा च पापैकमयानि तानि ॥ २२ ॥ जीवादितत्त्वानि विवेद सम्यग् नवाप्यसौ तीक्ष्णमतिर्नरेशः । बुबोध
धर्म्मं दशधा व्यधाच्च रत्नत्रयाराधनमन्वहं सः ॥ २३ ॥ विज्ञातवानेष समग्रशास्त्रं प्रभोः प्रसादादचिरेण भूपः । करो-
त्यभीष्टं विहिता न किं किं सत्सङ्गतिः कल्पलतेव पुंसाम् ॥ २४ ॥ दानं मानयुतं ददत्प्रतिदिनं शीलं सलीलं दध-
द्बाह्याभ्यन्तरभेदभिन्नमसकृत्तीव्रं तपश्चाचरन् । सद्भावं भवनाशनाय स भजन् जानंश्च धर्मस्थितिं सिद्धान्तामृतपानलीन-
हृदयो भूपोऽभवद्धार्मिकः ॥ २५ ॥ रुचिरतरविहारान् कारयन् श्रीकुमारो निजगुरुगुरुभक्तिं बिभ्रदभ्रान्तचेताः । दुरि-

तविजयसिंहं जैनधर्म्मे सुकर्म्मोद्यतमतिरिति चक्रे चक्रिवत्सोऽद्वितीयम् ॥ २६ ॥ श्रीरत्नसिंहगुरुपादसरोरुहालिश्चारित्रसुन्दरकविर्यदिदं ततान । तस्मिन् कुमारचरिते प्रतिबोधनाय सर्गः समाप्तिमगमत्सुगमस्तुरीयः ॥ २७ ॥

॥ इति भट्टारकश्रीरत्नसिंहसूरिशिष्योपाध्यायश्रीचारित्रसुन्दरगणिविरचिते श्रीकुमारपालचरिते महाकाव्ये प्रतिबोधवर्णनो नाम चतुर्थः सर्गः ॥ ४ ॥ ग्रन्थाग्रं १२५ ॥



## ॥ अथ पञ्चमः सर्गः ॥

नृपप्रबोधाय विमायचित्तः श्रीहेमचद्रः कृतनित्यमद्रः । श्रीपत्तने सत्तमचक्रवन्द्यस्तस्थौ स्थिरश्रीर्गुणवृन्दहृद्यः ॥ १ ॥ स तत्र संस्थोऽपि निजैर्यशोभिरुद्भासयामास जगत्समस्तम् । व्योमाङ्गणस्थोऽपि करोति भानुर्भाभिः प्रकाशं भुवनेऽखिलेऽपि ॥ २ ॥ सन्देहसन्दोहमपाचकार गुरुर्गरिष्ठातिशयैः ससारः । तस्य प्रशस्यं प्रससार लोके सर्वज्ञनामोत्तमधाम धाम ॥ ३ ॥ काशीनिवासी स्वकलाकलापदासीकृताशेषजनः प्रकाशी । तद्देवबोधः कृतवादिरोधः शुश्राव नामान्यकृतावबोधम् ॥ ४ ॥ श्रीहेमचन्द्रेण समं विवादं कर्तुं समागात् समदेन तत्र । अहो ! सहन्ते नहि मानवन्तस्तेजः परेषामधिकं समर्षाः ॥ ५ ॥ मरुच्चलाभ्यां गगनस्थिताभ्यां वेविज्यमानो वरचामराभ्याम् । उत्पाट्यमानः शिशुभिस्त्रिवर्षैर्हर्षप्रकर्षात्कदलीदलस्थः ॥ ६ ॥ जनेन चित्रं दधताखिलेन निरीक्ष्यमाणो बहुदत्तदानः । मदेन जानँस्तृणवज्जगत्स जगाम भूमीशसभामभीतः ॥ ७ ॥ युग्मम् ॥ चकोरसारङ्गमयूरकीरमरालकाकोत्कृकवाकुयानान् । शिष्यांस्तदीयान् शतशो निरीक्ष्य

लोकः परं विस्मयमाससाद ॥ ८ ॥ आशीःपदं सादविवर्जिताय नृपाय दत्त्वोदितवाक्प्रपञ्चः । उपाविशत्तत्पुरतो वरेण्यां पश्यन् सभां भूपतिवृन्दहृद्याम् ॥ ९ ॥ अर्हद्वचोधौतमनोमलोऽपि भूपः स भानूपलनिर्म्मलोऽपि । तामद्भुतां शक्तिमवेक्ष्य तस्य किञ्चिच्चमत्काररसं प्रपेदे ॥ १० ॥ शमस्ति वोऽङ्के विदधे किमर्थं निवेद्यतां स्वागमनप्रयासः । जोङ्कारपूर्वं नृपतिर्जगाद संन्यासिनं नीतिविदां स मुख्यः ॥ ११ ॥ त्यक्तक्रमं जैनमतानुरक्तं श्रुत्वा भवन्तं भवसन्निदेशात् । पुनर्वयं स्थापयितुं स्वधर्म्मे समागताः स्मः स तमित्युवाच ॥ १२ ॥ विधाय तद्देशगतामितैना वार्त्तां विनोदेन चिरं नरेशः । व्ययाय दत्त्वा द्रविणं क्षणेन सम्मानपूर्वं विससर्ज साधुम् ॥ १३ ॥ संवासितं जैनमतेन बाढमुपायसाध्यं नृपतिं विचिन्त्य । विनेयवृन्देन युतः स योगी शिवालयेऽस्थात् स्थिरधीरबुद्धिः ॥ १४ ॥ तं मन्त्रतन्त्रप्रभृतिप्रयोगैरखण्डपाखण्डभरं सृजन्तम् । [1]प्रशंसयामास जनो नवीनरुचिः सदा चारुविचारहीनः ॥ १५ ॥ भूपः स्वरूपं सकलं गुरुभ्यो न्यवेदयद्विस्मितमानसस्तत् । वार्त्तामनाख्याय सुहृज्जनाय स्वहृद्गतामेति सुखं न कश्चित् ॥ १६ ॥ स्वयोगशक्त्या गुरवो विहाय भुवोऽन्तरं हस्तमितं ततस्ते । व्योमस्थिताः श्रोतृसुधोपमेयां व्याख्यां वितेनुर्विहितोरुचित्राः ॥ १७ ॥ युक्त्या प्रयुक्ता गुरुभिः स्वशक्तिरपाकरोत्तां किल योगिमायाम् । प्रभेव भानो रजनीं जिनेन्द्रपूजेव संसारततिं क्षणेन ॥ १८ ॥ तावद्भवेत्स्यन्दनिकात्र गुर्वी न सागरो दृक्पथमेति यावत् । ज्येष्ठो विचिन्त्यश्चटको हि तावत्समेति यावन्न च वैनतेयः ॥ १९ ॥ वृथा प्रपञ्चैकमयानि तावन्मतान्तराणि प्रभवन्ति लोके । मायातमोऽपोहदिनेशतुल्यो यावन्न सर्वज्ञमतावबोधः ॥ २० ॥

---

१ "प्रयोजयामास"इत्यपि ॥

कमप्युपायं हृदये विचिन्त्य नृपप्रबोधाय विधाय मायाम् । आकारयत्सोऽन्यदिने कुमारं शिवालये प्रेष्य निजं विनेयम् ॥ २१ ॥ श्रीमान् कुमारः स्वपरिच्छदेन युतो ययौ तत्र सचिन्तचित्तः । उपाविशद्योगिपुरः प्रमोदात्किमर्थमाकारयमित्युदित्वा ॥ २२ ॥ यन्मुक्तवांस्त्वं कुलधर्म्ममत्र ततोऽतिघोरे नरके नरेन्द्र ! । त्वदीयमातापितरावगातां तत्राधुना स्तो बहुदुःखदग्धौ ॥ २३ ॥ वृथा प्रपञ्चेन कृतं कृतं ते तौ दर्शयाम्येष तथास्वरूपौ । जानाति सर्वं किल तन्मुखेन यथा भवानित्यवदत्स भूपम् ॥ २४ ॥ सकौतुकं पश्यति भूमिनाथे स्थितेषु मौनेन जनेषु तत्र । महेशपूजां विधिवद्विधाय दृढासनस्थः स जजाप मन्त्रम् ॥ २५ ॥ आक्रन्दशब्देन समं सशोकं भूमितलान्निर्गतमुग्रगन्धम् । पुंस्त्रीस्वरूपं मिथुनं क्षणेन दयाकरं तत्र ददर्श भूपः ॥ २६ ॥ दुर्गन्धरुद्धाखिलदिग्विभागौ कुष्ठेन नष्टावयवौ कृशाङ्गौ । भृशं श्रवत्पूतिभरावलिप्तौ विकीर्णकेशावृतदीनवक्त्रौ ॥ २७ ॥ नानाप्रहारव्रणजर्जराङ्गौ पृष्ठप्रदेशे दृढबद्धहस्तौ । दीनं रटन्तौ च निरीक्ष्य तौ ते शोकं च कुत्सां च दधुर्नृपाद्याः ॥ २८ ॥ युग्मम् ॥ किमेतदेवं चकितः स यावन्निरीक्षते भूमिपतिः पुनस्तौ । तावच्छरीरावयवादिचिह्नैरमन्यतासौ पितरौ स्वकीयौ ॥ २९ ॥ करोति चर्चां हृदये स यावत्तावत्सदुःखाश्रुभरं विमुञ्चन् । पश्यन् कुमारस्य मुहुर्मुखाब्जं सगद्गदं वाक्यमिदं पिताह ॥ ३० ॥ निःसंख्यसौख्यात्त्रिदिवात्स्वकीयं हित्वा कुलाचारभरं त्वयावाम् । वत्साधुना तुच्छधियातिघोरे किं पातितौ रौरवरन्ध्रमध्ये ॥ ३१ ॥ धूर्तेन तेन व्रतिनास्यवश्यं वशीकृतः कार्म्मणकर्मभिस्त्वम् । यतोऽनिशं तद्गतचित्तवृत्तिर्गुणागुणं वत्स ! न वेत्सि किञ्चित् ॥ ३२ ॥ न श्राद्धपिण्डादि ददासि यन्नो न तर्प्पणाद्यं वितनोषि यच्च । क्षुत्तृड्भराक्रान्ततनुस्ततोऽहं स्वर्गे प्रवेशं न लभे नरेश ! ॥ ३३ ॥ वत्सावतीर्णेन कले कुले

नस्त्वया त्रयं निर्गमितं प्रभूतम् । त्यक्तस्वधर्म्मेण कुधर्मभाजा स्वर्गः सुखं पूर्वजनाम चेति ॥ ३४ ॥ श्वभ्रे सहन्ते यदपूर्वदुःखं पङ्क्तौ सुराणां न विशन्ति यच्च । विनाश्रमं यद्विचरन्ति पूर्वे भवत्प्रसादस्तदयं समग्रः ॥ ३५ ॥ असद्वचोभिर्नरकेऽति घोरे पूर्वैः समं पातय मा स्वमाशु । लसत्प्रबोधं भज देवबोधं यदीहसे मुक्तिसुखं क्षणेन ॥ ३६ ॥ तत्पुत्र ! त्यक्त्वा जिनधर्मरागं स्वधर्ममङ्गीकुरु मुक्तिदं द्राक् । अदभ्ररन्ध्राद्धनदुःखदग्धानस्मान् धराधीश! समुद्धराशु ॥ ३७ ॥ भृशं गलल्लोचनवारिवारं निवारयन्ती वसनाञ्चलेन । मुहुर्विलापाकुलिताखिलाङ्गी दीनानना तं जननी जगाद ॥ ३८ ॥ मनोरथाः पुत्र ! पुरा कृता ये मयोदरस्थे त्वयि दीर्घबुद्ध्या । व्यर्था अभूवन् खलु साम्प्रतं ते भवत्कदाचारवशेन सर्वे ॥ ३९ ॥ कथं न वन्ध्या किमु निःसुताहं निन्दुर्न जज्ञे किमु भाग्यहीना । जातेन जाता भवता भवेऽस्मिन् यतोऽधमानामपि हास्यहेतुः ॥ ४० ॥ किञ्चिद्धितं वाञ्छसि चेत्स्वपित्रोः संन्यासिनं पुत्र ! तदाश्रयैनम् । यत्पादसेवां रचयन्ति देवाः कल्पद्रुवच्चिन्तिततदानदात्रीम् ॥ ४१ ॥ मासान्मया यन्नवमध्यमध्ये दध्रे भवान् वृद्धिमनायि कायः । तन्निष्क्रयार्थं मम मानयेदं वचः सदा मानद ! दम्भहीनम् ॥ ४२ ॥ इत्थं वदन्ती परिदेवनं सा चकार कारुण्यरसावतारम् । आकर्णयन्तो निखिलाः क्षणान्ते सभासदः साश्रुदृशो बभूवुः ॥ ४३ ॥ स्वस्वोचितं वञ्चितसर्वशत्रोस्तदेत्युदित्वा बहुधा नृपस्य । पश्यत्सु सर्वेषु जनेषु तत्र क्रमादगातां च यथागतं तौ ॥ ४४ ॥ सिक्तोऽपि सिद्धान्तजलेन नित्यं सुबद्धमूलोऽपि फलप्रदोऽपि । तद्वाक्यवात्यानिहतः समन्तात्किञ्चिच्चकम्पे नृपबोधिवृक्षः ॥ ४५ ॥ यः कर्म यादृग् विदधाति जन्तुर्भुङ्क्ते स तादृक् सदसद्भवेऽस्मिन् । अर्हद्वचांसीति मया श्रुतानि किमुक्तमाभ्यां बत ! तद्विरुद्धम् ॥ ४६ ॥ उदेति भानुर्यदि पश्चिमायां जहाति

सीमामपि सागरोऽत्र । चलत्यथो मेरुगिरिः कदाचिदर्हद्वचः स्यान्न तथाप्यसत्यं ॥ ४७ ॥ किमिन्द्रजालं किमु दृष्टिबन्धः
स्वप्नोऽथवा किं किमु देवमाया । विदन्ति तत्त्वं गुरवोऽत्र सम्यग् हृदा निगद्येत्युदतिष्ठतासौ ॥ ४८ ॥ साक्षाच्छिवोऽयं
हरिरेष साक्षादयं स्वयम्भूरथ देवसूरिः । तमस्तवीदित्यखिलोऽपि लोकः संन्यासिनं वीक्ष्य तदाद्भुतं तत् ॥ ४९ ॥ मत्वा
कुमारं हृदि संशयानं तत्कल्पितं तस्य यतेर्विचिन्त्य । श्रीवाग्भटाख्यः सचिवस्तदैव न्यवेदयत्तत्सकलं गुरुभ्यः ॥ ५० ॥
किमिदमिति कदाचित्सत्यतामेति किञ्चिद्वितथमथ समस्तं भुज्यते क्लृप्तकर्म्म । अथ महदिह चित्रं दर्शितं तेन मन्ये
नृपतिरिति स चित्ते चिन्तयामास भूरि ॥ ५१ ॥

॥ इति श्रीकुमारपालचरिते विवादसर्गे प्रथमो वर्गः ॥ ग्रंथाग्रं ८० ॥



योगिनः कपटकोटिभिरुच्चैस्तापितोऽपि नृपतिः प्रकृतिं स्वाम् । नात्यजद्विशदहेमवदेष प्राप कान्तिमधिकां च विशे-
षात् ॥१॥ वन्दितुं निजगुरुं नरनाथः सोऽगमत्स्वपरिवारसनाथः । नो धिनोति महिरादिह कोऽपि चक्रवाकमपरास्पृहमन्यः
॥ २ ॥ कालभावसदृशैरभिनन्द्य तं वचोभिरुचितैश्चिरकालम् । तस्य संशयनिराकरणार्थं ध्यानमेष विदधेऽथ मुनीशः ॥३॥
देवदुन्दुभिनिनाद उदारोऽभूत्क्षणेन गगने सुखसारः । किं किमेतदिति सर्वजनौघा यं निशम्य ययुरुन्मुखतां ते ॥ ४ ॥
वासयन् दशदिशो निजगन्धैरन्धयन्मधुकरान्मकरन्दैः । सम्पपात गगनादतिहृद्यः कल्पवृक्षकुसुमप्रकरोऽथ ॥ ५ ॥ इत्य-
नेकविधमुद्धतमन्धोभोजनागमनसूचकमुच्चैः । वीक्ष्य चिह्नमनिमेषदृगासीत्तत्र चित्रलिखितेव सभा सा ॥ ६ ॥ किङ्किणीक्कण-

गणानणुशोभं भानुमण्डलमिवोज्ज्वलरोचिः । अम्बरादवतरत्सुरयानं ते क्षणेन ददृशुर्वरमेकम् ॥ ७ ॥ भानुमण्डलमिदं किमु नव्यं वासरे किमुदयो हिमरश्मेः । पिण्डितं किमु महोऽथ मणीनामित्यचिन्तयदवेक्ष्य जनस्तत् ॥ ८ ॥ तद्विहायसि विहाय विमानं मानवस्थितिमियाय तदैकः । नाकिनायकसमोऽसमरूपो निर्जरः सुरवृतः स्ववधूयुक् ॥ ९ ॥ किं स्मरः किमु हरिः किमु शक्रः किं विधुः किमु विरञ्चिरथासौ । दिप्तिलुसतरणिस्तरुणोऽत्र कोऽयमेति जनतेति जगाद ॥ १० ॥ विजितविधुरुचिभ्यां पार्श्वयोश्चामराभ्यामतिललिततनुभ्यां वीज्यमानं सुरीभ्याम् । शिरसि विधृतचञ्चच्छत्रमालोक्य लोकाः किमिदमिति मुहूर्तं तेऽभवन्मोहवन्तः ॥ ११ ॥ इति विततवितर्कव्याकुले सर्वलोके सति विगतनिमेषं तत्पथं वीक्षमाणे । सपदि नृपसमीपं प्राप्य सार्द्धं स्ववध्वा निजजपलयभाजं सोऽस्तवीत्सूरिराजम् ॥ १२ ॥ भविककमलहेले ! कृत्तकन्दर्पकेले ! दलितसकलमोह ! ध्वस्तपापप्ररोह ! । भवजलनिधिसेतो ! मोक्षतत्त्वैकहेतो ! जय जय गततन्द्र ! त्वं सदा हेमचन्द्र ! ॥ १३ ॥ यतिपतिमभिनम्याष्टाङ्गसंस्पृष्टभूमी तदनु मिथुनमेतत्सम्यगासांबभूवे । नरपतिरपि बाढं वीक्ष्य तौ देहिचिह्नैर्निजजनकजनन्यौ तत्र मेने समेतौ ॥ १४ ॥ कुमरनृपतिरास्ते यावदालोकयंस्तं मुदितहृदयवृत्तिस्तावदालिङ्ग्य बाढम् । अवददिति स देवो हर्षबाष्पाणि मुञ्चन्नुचितवचनदक्षः स्नेहवल्लीद्रुवृक्षः ॥ १५ ॥ अयि मम घनकालात्सङ्गमस्तेऽद्य जज्ञे दिनमिदमतिहृद्यं तेन मन्ये नरेश ! । जिनमतरुचिरेवं यस्य पुत्रस्त्वमासीस्तदहमपि च जाने धन्यमात्मानमत्र ॥ १६ ॥ जिनवचनरतेन त्यक्तमिथ्याव्रतेन तनय ! नरकमध्यादुद्धृताः पूर्वजाः स्वे । दधिविधुशिवशुभ्रं स्वं यशो देवशस्यं कुलमपि भवतेदं निर्म्ममे निर्म्मलं च ॥ १७ ॥ सुत ! तव दिवि कीर्त्तिं किन्नरीगीतगीतां वयमपि हृतचित्ताः सर्वदाकर्णयामः । मुदितमनस एवं

देवपङ्क्तौ रमन्ते तनयनिखलपूर्वं त्वत्कृताज्जैनधर्म्मात् ॥ १८ ॥ प्रणयरचितचाटुर्वाढमालिङ्ग्य पूर्वमवददिति विनीता तं ततः स्वर्वधूः सा । तव विरचितपुण्यात्पुत्र! पुण्यान्वितान्तं त्रिभुवनजनमान्यं विश्रुता चाहमासम् ॥१९॥ कृतसुकृततातिं त्वां पुत्ररत्नं प्रसूयाहमजनि जननीषु प्राप्तपुण्यप्रकर्षा । अथ च तनय! कुक्षिं स्वं हि जानामि धन्यां त्वमतिविदितवृत्तो यत्र पुत्रोऽवतीर्णः ॥ २० ॥ इति विविधमुदित्वा स्नेहसम्मानपूर्वं सुरतरुकुसुमानां वृष्टिमामुच्य मोदात् । तदनु निजविमानं तत्समारुह्य हृद्यं निजभुवनमगातां दम्पती तौ च सद्यः ॥२१॥ तदतिशयसमृद्धं वीक्ष्य वृत्तं क्षितीशश्चिरतरमवतस्थे विस्मयस्मेरचक्षुः । किमिदमिति मुहूर्त्तं चिन्तयन्मानसान्तः स्थिरतनुनयनोऽस्थात्सर्वलोकेन सार्द्धम् ॥ २२ ॥ निविडनरकदुःखोत्पीडितौ प्रागपश्यं स्वरतिसुखनिमग्नौ मातृताताविदानीम् । इदमृतमुत तत्किं संशयश्चेति बाढं नृपतिमनसि दोलाकेलिलीलां वितेने ॥ २३ ॥ इह निजनिजशक्त्या दर्शितं चित्रहेतोर्वितथमखिलमेतद्भूप ! जानीहि विज्ञ ! । अवददिति मुनीशस्तेन राज्ञा स पृष्टो जिनगदितमृतेऽन्यन्मोक्षदं नास्ति तत्त्वम् ॥ २४ ॥ स्पृशति तरणिसाम्यं न ग्रहः कश्चिदत्र भजति न समतां वै कोऽपि सिंहेन दंष्ट्री । कृतकृतकविचाराण्यत्र मिथ्यामतानि न जिनसमयसाम्यं तद्वदासादयन्ति ॥ २५ ॥ कुमरनृपतिरित्थं शुद्धसिद्धान्तवाक्यैर्विधुतसकलशङ्कोऽगाद्गृहं स्वं क्षणेन । विहृतसमदवादिव्यूहदर्पावलेपं सुरवरगुरुतुल्यं सूरिराजं स मेने ॥ २६ ॥ इति स मुदितं दृष्ट्वा सूरिं निरस्ततमोव्रजं रविमिव मुदं प्रापुः कोका इवोत्तममानवाः । निजमदभरं मुक्त्वा घूका इवाशु कुवादिनोऽजनिपत चिरं मूका भास्वद्विभाभरभासुरम् ॥ २७ ॥

॥ इति श्रीकुमारपालचरिते विवादसर्गे द्वितीयो वर्गः ॥

स्वमन्त्रतन्त्रप्रभृतिप्रयोगैरजय्यमाचार्यवरं विभाव्य। तं तर्कवादेन विजेतुमेष इयेष योगी जितवादिवृन्दः ॥ १ ॥ अखर्वगर्वेण चकार पत्रावलम्बनं द्वारि नृपस्य गत्वा। स सन्निपातीव च मर्तुकामो विरुद्धवाक्यान्यवदद्वहूनि ॥ २ ॥ बाहुं स्वमुत्क्षिप्य दृढं ब्रवीमि वदन्तु ते शक्तिरिहास्ति येषाम्। समस्तवादिद्रुदवानलाभे मयि स्थिते कोऽपि न वेत्ति किञ्चित् ॥ ३ ॥ बृहस्पतिः किं कुरुतां वराको ब्रह्मापि जिह्मो भवति क्षणेन। मयि स्थिते वादिकरीन्द्रसिंहे नैवाक्षरं वेत्ति महेश्वरोऽपि ॥ ४ ॥ षट्तर्कदक्षः क्षितवादिपक्षः समस्तविद्वज्जनचक्रमुख्यः। निर्द्धाटिताशेषलसद्विपक्षो मत्तः परो नास्ति कृतोरुकक्षः ॥ ५ ॥ रे रे मदं वादिगणा विहाय यूयं मदाज्ञां शिरसा वहध्वम्। नो चेन्मदादेशवशं विहाय महीतलं यात दिगन्तमाशु ॥ ६ ॥ ये शास्त्रनीराकरमेरुरूपाः कलाकलापामलनारिकूपाः। ये वादविद्यानिपुणा नितान्तं तेषां शिरस्येष पदोऽस्ति दत्तः ॥ ७ ॥ इत्यादिपद्यानि मदोद्धताङ्गः स्वोत्कर्षपोषप्रकराणि तेषु। लिलेख पत्रेषु विशेषविज्ञो हृल्लेखवानेष मनीषिमुख्यः ॥ ८ ॥ सर्वाणि तद्गर्वभरेण सार्कं छित्वाशु पत्राणि पवित्रबुद्धिः। अलीलिखत्सूरिरिमानि तत्र हृद्यानि पद्यान्यनवद्यविद्यः ॥ ९ ॥ षट्चक्रागमतर्ककर्कशलसद्वादीन्द्रमुद्राद्रुमश्रेणीदाहदवानलः कलिमलध्वंसी स्मरन् ह्रीमति। वेदाभ्यासनिविष्टदुष्टमनसां षट्कर्मणां मर्म्मणां कन्दोत्पाटनलम्पटः सितपटः श्रीहेमचन्द्रो गुरुः ॥ १० ॥ कः कुन्तेन शितेन नेत्रकुहरे कण्डूयनं काङ्क्षति कः कण्ठीरवकण्ठकेसरसटां लातुं सुधीर्वाञ्छति। कः सन्नह्यति पन्नगेश्वरशिरोरत्नावतंसः श्रिये कः श्रीमज्जिनशासनस्य कुरुते वन्द्यस्य निन्दामिमाम् ॥ ११ ॥ भेकश्चपेटां फणिनः प्रदातुमयं समेतोऽद्भुतसाहसेन। सार्द्धं मया यत्किल तर्कवादं त्वमीहसे ध्वस्तसमस्तबुद्धे! ॥ १२ ॥ क्रीडन्तु तावद्धरिणा यथेष्टं यावत्समायाति

वने न सिंहः । पुष्णन्तु धिष्ण्यानि विभां च तावदुदेति यावन्नहि चण्डरश्मिः ॥ १३ ॥ निरस्तशङ्का विचरन्तु भेका यावत्फणी नो स्फुरति स्फटावान् । वदन्तु तावद्भुवि वादिनोऽन्ये समेमि यात्रत्किल नाहमत्र ॥ १४ ॥ ततो विवादं विदधुर्म्महान्तं संन्यासिना तेन समं मुनीशाः । सकौतुकं पश्यति सभ्यलोके राज्ञः सभायां भयहीनचित्ताः ॥ १५ ॥ अजय्यमेनं परिभाव्य सूरिं चकार योगी कुटिलं स भूरि । दोपं हि दोपज्ञवरो नरोऽपि न पश्यति स्वार्थपरः कदाचित् ॥ १६ ॥ सर्प्पान् स दर्प्पप्रवरान्मुमोच योगी गुरुं हन्तुमनास्तदानीम् । तन्निग्रहार्थं निजमन्त्रशक्त्या गुरुर्विचक्रे नकुलान् क्षणेन ॥ १७ ॥ अलीन्विलोलानमुचत्स योगी सूरिं निहन्तुं हतबुद्धिवृद्धिः । तन्नाशकर्तॄनसृजन्मुनीशो घोरान्मयूरानुरुरावन्तः ॥ १८ ॥ स मूपकान् दूपकचक्रमुख्यो महाविपांस्तीक्ष्णमुखानमुञ्चत् । मार्जारजातं कृतशीघ्रपातं स तज्जयार्थं विदधे मुनीशः ॥ १९ ॥ ववर्षचामर्षभृतोऽग्निजालं स प्राप्तकालोऽथ गुरूपरिष्टात् । अकालधाराधरधारयन्तं निन्ये शमं सूरिवरः सुखेन ॥ २० ॥ स देववोधो मशकान् शितास्यान् मुमोच भूयो गुरुनिग्रहार्थम् । विधाय धूमं सह तत्समयेन निराकरोत्तान्तिततान् यतीन्द्रः ॥ २१ ॥ क्षणेन खिन्नो भ्रमरान् भ्रमान्धो नाशाय सूरेरमुचत्स चण्डः । उपायविद्धस्तिमदौघवृष्टिं तस्योपरिष्टादतनोन्मुनीशः ॥ २२ ॥ तद्गन्धलोभेन तमेव सर्वे तेऽवेष्टयन्नाशु विलोकिताशम् । विधौ विरुद्धे सति जायतेऽत्र स्वमेव शस्त्रं निजघातहेतुः ॥ २३ ॥ शिलीमुखैस्तीक्ष्णमुखैरसंख्यैः शिलीमुखाभैः स कदर्थ्यमानः । भूतार्त्तवत्स्वं वपुरात्तकम्पोऽधुनाद्भृशं भृङ्गनिवारणार्थम् ॥ २४ ॥ नृपाङ्गणे भृङ्गविदार्यमाणः स देववोधो नटवन्ननर्त्त । प्रदत्ततालं समकालमेवाहसन् जनास्तं निखिला श्लिथाङ्गम् ॥ २५ ॥ इत्यादि यद्यद्विदधे स योगी जयाय सूरेः कुटिलं स्व-

शक्त्या । अजाकृपाणीविधिना स लेभे तेनैव घातं हतधीस्तदानीम् ॥ २६ ॥ तयोर्विवादो निजपक्षरक्षाकृतोऽकृतान्तोद्यतचेतसोः सः । विपक्षपक्षक्षितितीक्ष्णबुद्ध्योः षण्मासमासीदिति दत्तचित्तः ॥ २७ ॥ सम्प्रेरितः सभ्यजनैर्नरेशोऽन्यदा प्रणम्येति जगाद सूरीन् । सीदन्ति कार्याण्यखिलानि तस्माद्विसृज्यतामेष विभो ! विवादः ॥ २८ ॥ अस्त्वेवमेवं निगदन्मुनीशः संन्यासिनं प्राह महास्वरूपः । आद्यं वचो यस्य भवेदसत्यं तस्याजयः स्यादहनीह योगिन् ॥ २९ ॥ यद्वचो भवति सत्यमिदानीमाद्यमद्य विजयः खलु तस्य । किं वृथा प्रलपितेन घनेन निर्णयस्त्वरितमेव विधेयः ॥ ३० ॥ पराजयो यस्य भवेत्स नूनं निर्वास्यते गूर्जरदेशमध्यात् । विडम्बनां भूरितरां विधाय सभ्याः पणं तत्र वितेनुरेवम् ॥ ३१ ॥ स्थिरं समीरं चपलं च मेरुं शीतं हुताशं शशिनं तथोष्णम् । दिनं च रात्रिं रजनीं च घस्रं विपर्ययेणेह वदामि सर्वम् ॥ ३२ ॥ तस्थुः प्रतिज्ञामिति ते विहाय सभासमक्षं व्रतिनामधीशाः । स्वमानसान्तः स विमृश्य किञ्चिद्योगी जजल्पेति तदा विहस्य ॥ ३३ ॥ कुहूदिनं सर्वसमक्षमद्य निवेदयन् जैनयतेऽहमस्मि । कुर्वन्यथा ते यदि शक्तिरस्ति हित्वाभिमानं व्रज वा विदेशम् ॥ ३४ ॥ चिन्ताकुले च सकले सति सभ्यलोके ही किं भविष्यति कथं विजयश्च सूरेः । एवं विचिन्तयति भूमिपतौ यतीशो जेतुं विवादमिदमाह मदेन तत्र ॥ ३५ ॥ रे रे कथं वदसि भूमिपतेः सभायां राकादिने कुहुदिनं गतसर्वबुद्धे ! । रोगाभिभूत इव भूतशतात्तवद्धा रे त्वं वदन् वद कथं न विलज्जसे धिक् ॥ ३६ ॥ अवददिति स योगी कालभोगीव दुष्टो भवति यदि कुहुर्नो छिद्यते तर्हि जिह्वा । वितथमवितथं वा ज्ञास्यते सर्वमेतत् निशि शशिरहितायां वा युतायां नितान्तम् ॥ ३७ ॥ सभ्याः प्रापुः निजनिजगृहं मानयित्वा वचस्तत् प्रान्तं वादं स्वगुरुविजयं चिन्तयन्तो

नयन्तः । सर्वैर्लोकैर्विदितवचनौ वादिनौ सादहीनौ स्वं स्वं स्थानं निजजनयुतौ तावगातां क्षणेन ॥ ३८ ॥ कृष्णे पक्षे शशधरधरा किं भवेत्पूर्णमात्रामावास्येयं व्रजति विलयं किं कदाचिद्विचन्द्रा । एषाश्चर्यं जनयतितरां चिन्त्यमानापि वार्त्ता चिन्तामित्थं मनसि विदधे तत्र सर्वोऽपि लोकः ॥ ३९ ॥ चिन्तापूर्णे सति समजने तज्जयार्थं यतीशो देवीं पद्मां भुवनजननीमस्मरत्स्मेरचित्तः । आगत्याख्यत्सपदि विपदम्भोधियानाऽह्वियाना सादेशं मे वितर सुतरां मुञ्च चिन्तामिमां च ॥ ४० ॥ उद्यत्पूर्णमृगाङ्कमण्डलनिभं सा कुण्डलं स्वं गुरोरादेशेन मुमोच शोचिरुचिरं सायं नभोमण्डले । यद्दृष्ट्वा जिनधर्म्मिणो मुदमगुर्गाढं चकोरा इव मिथ्यादृग्जनतापतापमसतीव ध्वस्तसाता सती ॥ ४१ ॥ कैलाशाचलवन्नगाः सुरसरिद्वन्निम्नगा रेजिरे काका हंसवदाबभुः शुशुभिरे स्वर्दन्तिवद्दन्तिनः । सर्वे वारिधयोऽभवन् भुवि पयोऽकूपारपूरोज्ज्वला गुञ्जामौक्तिकसंनिभा विधुविभाभारैर्बभूवुस्तदा ॥ ४२ ॥ चञ्चच्चन्द्रमरीचिभिर्धवलिते लोके प्रणष्टं समं श्यामे संतमसं निलीय वदने संन्यासिनोऽस्थादिव । मन्येऽमानिव मानसे शुभदृशां हर्षप्रकर्षस्तदा विश्वेऽस्मिन् प्रससार चन्द्रकिरणव्याजान्वितान्तोज्ज्वलः ॥ ४३ ॥ ननु तिमिरभराढ्या वर्त्ततेऽमावसीयं तदयमुदय आसीच्छीतरश्मेः किमेषः । भ्रममिममथ कश्चिच्चक्षुषोरेष दत्ते मम किमु मनसेदं चिन्तयामास भूपः ॥ ४४ ॥ चतुरतरचरौघान् स्वांश्चतुर्दिक्षु दक्षो नृपतिरमितवेगाद्वीक्षितुं प्राहिणोत्तत् । व्यधिकदशमितं तं योजनानां प्रदेशं सपदि विपदपेतास्ते समीयुः समीक्ष्य ॥ ४५ ॥ राजद्राजकलाकलापकलितां राकां वराकस्तदा दृष्ट्वा नष्टमतिः प्रणश्य स ययौ योगी विदेशं रयात् । तत्कर्णाभरणं तमःप्रहरणं प्रातः सुरी स्वं ललावादित्येन समं समापदुदयं सूरिर्विजित्य द्विषः ॥ ४६ ॥ तन्वन्नीरजराजिबोधमसकृद्दोषोत्करं

कुमा-
पाल-
च-
॥

संहरन्नाशोल्लासमलं दिशत् सुमनसां व्यूहं जयन् लीलया । स्वाचारं रचयंश्चिरं गुरुकविज्ञानन्दवृन्दं दधत् शश्वद्विश्व-जनप्रकाशमसृजत्सूरिः स सूर्यप्रभः ॥४७॥ श्रीरत्नसिंहगुरुपादसरोरुहालिश्चारित्रसुन्दरगणिर्यदिदं वितेने । श्रीमत्कुमारच-रितेऽत्र विवादसंज्ञः सर्गः समाप्तिमगमत्किल पञ्चमोऽयं ॥ ४८ ॥

इति भट्टारकश्रीरत्नसिंहसूरिशिष्योपाध्यायश्रीचारित्रसुन्दरगणिविरचिते श्रीकुमारपालचरिते महाकाव्ये जयाङ्के विवादनामा पञ्चमः सर्गः ॥ ग्रन्थाग्रं १९३ ॥

---

॥ अथ षष्ठः सर्गः ॥

अथो स देशेष्वखिलेषु हिंसां निवारयामास गुरूपदेशात् । सामर्थ्यसार्थे सति विश्वसारे पापं न को वारयति प्रवीणः ॥ १ ॥ कण्टेश्वरी नाम सुरी चकास्ति गोत्रेश्वरी तस्य जगन्नमस्या । समीहते सा नवरात्रमध्ये चौलुक्यवंशीयनरेशपूजाम् ॥ २ ॥ शतं स्तभानां महिषस्तथैको निहन्यते पूर्वदिने पुरोऽस्याः । द्वितीयघस्रे द्विगुणं तदेव क्रमाद्भवेन्नन्दगुणं नवम्याम् ॥ ३ ॥ समागतेऽस्मिन् समये नरेशस्तद्दुष्करं कार्यमतीव मत्वा । श्रीसूरये दूरितजीवहिंसो न्यवेदयल्लब्धजगत्प्रशंसः ॥ ४ ॥ हिंसोपदिष्टापि ददाति रन्ध्रं विघ्नो न तद्यद्विहिता तनोति । हित्वा दयां कामगवीनिभां कः करोति हिंसां सुखमाप्तुकामः ॥ ५ ॥ वाक्येन मातुः कृकवाकमेकं हत्वा पुरा पिष्टमयं नवम्याम् । यशोधरो दुःखभरं यमापज्जिनो विजानाति स एव वा तम् ॥ ६ ॥ स्वमन्त्रशक्त्या प्रकटां विधाय कण्टेश्वरीं सूरिवरास्ततस्ते । हिंसानिवाराय दया-

॥

प्रधानैः सम्प्रार्थयंस्तां मधुरैर्वचोभिः ॥ ७ ॥ उक्तापि बाढं गुरुभिर्न देवी तुतोष सन्तोषविवर्जिता सा । हितोपदेशोऽपि विषायते वै दुष्टे जने दुग्धमिव द्विजिह्वे ॥ ८ ॥ देवीगृहान्तर्महिषाम्मदाढ्या न मोचयंस्तेम च रोषपूर्णा । शतानि नन्दप्रमितान्यजानां संस्थाप्य तस्या भुवनोपदेशे ॥ ९ ॥ कदर्थिता मूत्रमलश्रवैस्तैस्तस्या रजन्यां प्रतिमा लुलायैः । अभज्यतालं निहता शिरोभिरितस्ततः सा रभसा भ्रमद्भिः ॥ १० ॥ मूर्त्तेर्निजाया महिषैः कृतां तामाशातनां गोत्रसुरी निरीक्ष्य । मदेन विश्वं तृणवद्विदन्ती चुकोप भूपाय गरिष्ठमाया ॥ ११ ॥ जिनार्चनामन्तरमन्तरारिहरं नमस्कारजपं विधाय । स धौतवस्त्राङ्कितपूतदेहः सुष्वाप सौधेऽथ कुमारपालः ॥ १२ ॥ चक्रं गदां शक्तिमथ त्रिशूलं भुजैश्चतुर्भिर्दधतीद्धरूपा । रक्ताक्षयाना रुधिरं पिबन्ती मुखेन वह्निव्रजमुद्वमन्ती ॥ १३ ॥ वेतालमालाकुलिता कराला ज्वालासमानोज्ज्वलदेहदीप्तिः । घोरेण हुङ्काररवेण कम्पं वितन्वती भूपगृहं जगाम ॥ १४ ॥ युग्मम् ॥ रे रे दुराचार ! विचारहीन ! किं भैरवीं वेत्सि न तुच्छबुद्धे ! । यन्मामविज्ञाय निरस्तशङ्कः सुखेन निद्रां कुरुषे त्वमित्थम् ॥ १५ ॥ एवं वदन्ती च भयं दिशन्ती सा यामिकानां यमतुल्यरूपा । तदा मदान्दोलितसर्वदेहा समीपमाप क्षितिनाथकस्य ॥ १६ ॥ तद्गर्जितं स्फूर्त्तियुतं नितान्तं श्रुत्वा नरेन्द्रोऽत्यजदाशु निद्राम् । उपद्रवं कर्तुमथागतां तां विवेद कालीं कलिकालरूपाम् ॥ १७ ॥ उद्भ्रान्तचित्तोऽक्षुतजातशङ्कः किमेतदेव विमृशन् शनैः सः । विघ्नौघसङ्घातकरं हृदन्तः सस्मार सारं परमेष्ठिमन्त्रम् ॥ १८ ॥ मन्त्रप्रभावादशकन्न दातुं राज्ञः प्रहारं कुलदेवता सा । मुखेन दुर्वाक्यभरं किरन्ती कुष्ठीभवैवं प्रशशाप भूपम् ॥ १९ ॥ ततः श्रवत्पूतिभरावलिप्तं कुष्ठेन भूमीशशरीरमासीत् । भवन्ति वाचो वितथाः सुराणां लोके कदाचिद्यतिशापवन्नो ॥ २० ॥ सद्वे-



दनाविह्वलसर्वदेहस्तदा नृपः स्थातुमलं न सोऽभूत् । अर्हद्वचोवासितसप्तधातुर्दध्यौ मनस्येवमसेवितान्यः ॥ २१ ॥ सर्वे-
ऽपि मां कुष्ठविनष्टदेहं बहिर्मुखाः प्रातरवेक्ष्य लोकाः । दास्यन्ति दोषं जिनशासनस्य मालिन्यमुच्चैर्भुवि भावितेन ॥ २२ ॥
यावन्न जानाति जनः स्वरूपमिदं हि तावन्निजदेहमेतत् । भस्मीकरोमीति विमृश्य सूरीनाकारयत्प्रेष्य स धीसखं स्वम्
॥२३॥ आगत्य वृत्तं तदवेत्य सम्यक् तस्माद्विधेस्तं नितरां निवार्य । आचार्यवर्या अभिमन्त्र्य मन्त्रैर्ददुर्जलं ते गदशान्ति-
हेतु ॥ २४ ॥ अमृतममृतकल्पं तत्कुमारः पपौ द्रागजनि विगतरोगं तच्छरीरं च तेन । निजगुरुगुरुशक्तिं तामचिन्त्यां
विलोक्याकलयदतुलचित्रं मानसेऽसौ स्मराभः ॥ २५ ॥ हृतहरिहरिरोचिः कामरुक् क्लृप्तशान्तिं वपुरुपचितमासीद्यत्प्र-
सादादसादम् । उपसि जिननमस्यामाशु कृत्वोत्कचित्तः क्षितिपतिवृतोऽगाद्वन्दितुं तं गुरुं सः ॥ २६ ॥ नरपतिरथ
पश्चाद्बद्धहस्तां विहस्तामतिरुचिरशरीरामाश्रमद्वारि रम्याम् । अविरलकलकान्तिं दीननादं नदन्ती युवतिमवनिदक्षो-
ऽपश्यदेकां दयावान् ॥ २७ ॥ यतिवसतिपुरस्ताद्दुःखिनीं तां निरीक्ष्योत्कृतकरुणविलापां बाष्पसंसिक्तभूमिम् । किमिद-
मिति विमृश्याश्वासनापूर्वमेवमवददवनिनाथोऽगण्यपुण्यैः सनाथः ॥ २८ ॥ विरम विरम बाले ! कामकुम्भीन्द्रशाले !
जहि जहि निजदुःखं भीरु ! धीरा भव त्वम् । अयि मयि सति भूपे पुण्यपानीयकूपे सति सति ! वद वाक्यं बाधते त्वां
क एवम् ॥ २९ ॥ जय जय नरनाथेत्याशिषं सा ददाना युवतिरवददुच्चैस्त्वद्गुरुर्बाधते माम् । अनृतमिति समस्तं चिन्त-
यंस्तन्नरेशः स पुनरनुनयार्थं सस्मितं तां जगाद ॥ ३० ॥ अहह महदनर्थं वक्तुमेतन्न युक्तं कथमतिचतुरा तत्कल्पितं जल्प-
सि त्वम् । किमसमशमदक्षा ज्ञातसिद्धान्तशिक्षा वद विदितविचारे ! साधवो घ्नन्ति जन्तून् ॥ ३१ ॥ नृप ! तव कुल-

देवी दानवी वीतशङ्का निशि लसदपराधं ते तदाकार्पमेषा। तदिह मुनिवरेणानेन बद्धा स्वमन्त्रैर्नृपतिमुकुट ! मुक्तासीति सोचे पुनस्तम् ॥ ३२ ॥ कृतकृतिजनहर्षां वीक्ष्य शक्तिं महर्षेः क्षितिपतिरतिशक्तिं विस्मयं प्राप भूरि। सुविनयमयमात्तप्राणिरक्षाव्रतां तां सुदृढनियमनाच्चामोचयद्रोचमानः ॥ ३३ ॥ आनन्दोदकपूर्णचक्षुरवदद्देवी दयायाः फलं श्रुत्वा सूरिमुखेन मोक्षसुखदं संप्राप्तबोधा सती। संसारावटकोटरेऽतिविकटे मुग्धा पतन्ती धृता येनाहं त्रिजगद्गुरो ! जय जय श्रीहेमचन्द्रानिशम् ॥ ३४ ॥ जय जय जय भद्रं तेऽस्तु भूपालचन्द्र ! त्रिभुवनजनरक्षाकारिणे वारितारे ! । अपि च जनपदान्तर्मारिदुर्भिक्षमुख्यास्त्वयि विदधति राज्यं विप्लवा मा भवन्तु ॥ ३५ ॥ नत्वा सूरिवरस्य पादयुगलं दत्त्वाशिषं भूभुजे कृत्वातुच्छमहोत्सवं जिनमतं तत्वा महीमण्डले। अङ्गीकृत्य दयाधिकारकरणे साऽऽरक्षकत्वं तदा कृत्याकृत्यविचारिणी दिवि ययावन्तर्हितं देवता ॥ ३६ ॥ प्राप्योपप्लवमुक्तिमुज्ज्वलतरं कुर्वन् दिशां मण्डलं सद्वृत्तः स्वकलाव्रजेन कुमुदं बाढं विकाशं नयन्। जीवानन्दपरो महाव्रतिपरो ध्वस्तान्यतेजोभरो राजा राजसमश्चकार नितरां विश्वावनं पावनम् ॥ ३७ ॥

॥ इति श्रीकुमारपालचरिते महाकाव्ये षष्ठसर्गे प्रथमो वर्गः ॥

---

प्रीत्या क्वचित् क्वापि स दोर्बलेन भक्त्या क्वचित् क्वापि नयेन दक्षः। महीतलेऽस्मिन्निखिले कुमारः प्रावर्त्तयज्जीवदयां दयावान् ॥ १ ॥ आनीय जालान्यखिलानि भस्मीचक्रे पुरेऽस्योपवने नरेशः। स धीवराद्यान्निजदेशमध्यान्निर्वासयामास विनाशकर्तॄन् ॥ २ ॥ सर्वेषु देशेष्वपि बम्भ्रमीति तस्योत्तमं पञ्चकुलं सदैव। निवारयज्जीववधं धरायां संस्थापयज्जैनमतं समन्तात् ॥ ३ ॥ यो नाममात्रामपि जीवहिंसां करोत्यलं तेन निगृह्यते सः। यो हन्ति जन्तून् सकलं गृहीत्वा निर्वा-

स्तेऽसौ द्रविणं स्वदेशात् ॥ ४ ॥ अथान्यदा श्रीजयचन्द्रराज्ञे विज्ञाय विज्ञातसमस्ततत्त्वः । स्वधीसखान् प्रेषितवान्
सहर्षं हिंसानिवाराय स काशिदेशे ॥ ५ ॥ आस्थानसंस्थस्य नृपस्य दत्त्वा ते प्राभृतं लेखमदुः सुदक्षाः । विशेषविज्ञः
स्वयमेष हर्षादवाचयत्काशिपतिर्गृहीत्वा ॥ ६ ॥ स्वस्ति शङ्करपुरे जयचन्द्रं भूपमिन्द्रसदृशं प्रणिपत्य । पत्तनात्कुमरपाल-
नरेशः सादरं सविनयं वदतीति ॥ ७ ॥ क्षेममाकलय देव ! सदाऽस्मास्वार्यवर्य ! समवेहि च कार्यम् । वर्जनीयमखिले निज-
देशे प्राणिहिंसनमहो ! भवतीति ॥ ८ ॥ तदर्थमत्यर्थविचारदक्षो मुख्यः स राज्ञां बुबुधे सुधाभम् । काशीपतिस्ताद्धिनयेन
तुष्टो न्यवारयज्जीववधं स्वदेशे ॥ ९ ॥ अमात्यवर्यान् बहुमानपूर्वममानयत्तानसमानबुद्धिः । चतुर्दशक्रोशशतप्रमाणे प्राव-
र्तयज्जीवदयां स्वदेशे ॥ १० ॥ जालानि लक्षप्रमितानि राज्ञे स प्राहिणोद्भूरिधनेन सार्द्धम् । श्रीपत्तनोद्यानवने कुमारो
भस्माकरोत्तानि सहांहसा सः ॥ ११ ॥ सपादलक्षे विषये विदक्षः स्वजायया मस्तकतोपनीय । समर्पितां पाणितलेऽथ
यूकाममारयत्कोऽपि वणिग्मदेन ॥ १२ ॥ धृत्वा दृढं पञ्चकुलेन राज्ञः समर्पितोऽसावपराधकारी । द्विलक्षसंख्येन धनेन तस्य
यूकाविहारं समकारयत्सः ॥ १३ ॥ वित्ते हृते तेन पुराप मृत्युं यो मूषको मोहविमूढबुद्धिः । तदीयनाम्ना विदितं विहा-
रमचीकरच्छ्रीकुमरः कृतज्ञः ॥ १४ ॥ आस्वाद्य मांसोपममन्यदा स्वस्वादेन भूपो घृतपूरपूरम् । किं युज्यते भोज्यमिदं
नृपाणामतुच्छधीः सूरिमपृच्छदेवम् ॥ १५ ॥ तच्चित्तभावं प्रभवो विदित्वा वदन्निदं युज्यत एव भोज्यम् । राजन् !
वणिग्ब्राह्मणयोः सदापि न भुक्तमांसस्य च राजसूनोः ॥ १६ ॥ तच्छुद्धिहेतोर्धुतपापबुद्धिर्द्वात्रिंशतीं चारुरुचीन् विहा-
रान् । अचीकरत् सूरिगिरा नरेशः श्रीपत्तने सत्तमचक्रमुख्यः ॥ १७ ॥ वर्षास्वसौ जन्तुविराधनोत्थं दोषं महान्तं गम-

नाद्विभाव्य । यास्यामि नो पत्तनतः परत्रेत्यभिग्रहं भूपतिराददे सः ॥ १८ ॥ सर्वत्र वार्त्ता प्रससार सारं कीर्त्त्या समं स्फूर्त्तिमती नृपस्य । वृत्तं सतां सूर्यमहः सुगन्धस्त्वयं स्वयं विस्तरमेतदेति ॥ १९ ॥ अभिग्रहं विग्रहवद्धबुद्धिर्निशम्य तं म्लेच्छपतिश्छलेन । तं जेतुमागादथ गर्जिनेशो भयं जनानां जनयन्नितान्तम् ॥ २० ॥ स कम्पयन् सर्वदिशो बलौघैर-वाप सीमां कुमरस्य वेगात् । समीपमायातमवेत्य तं द्राक् सर्वो जनः क्षोभमवाप कामम् ॥ २१ ॥ श्रीम्लेच्छराजागमनं विदैन्यमुपर्युपर्यैत्य चरास्तदानीम् । न्यवेदयन् भूपतयेऽथ सोऽभूच्चिन्ताकुलस्तच्छ्रवणेन शीघ्रम् ॥ २२ ॥ मामन्यथादुर्ज-यमेष मत्वाधुना छलं प्राप्य समाजगाम । स्युः शाकिनीव्यन्तरवैरिभूता नित्यं छलान्वेषणवद्धचित्ताः ॥ २३ ॥ उत्कटं स्वकटकं यदि बद्ध्वा यामि सम्मुखमहं यवनस्य । भङ्गमेष लभते नियमस्तदन्यथा च निपयः सह कीर्त्त्या ॥ २४ ॥ इतो बन्दीकृत्वा व्रजति जनतामेष यवन इतो भङ्गः स्यान्मे गमनविरते दुःखजनकः । इतो घोरो व्याघ्रः स्फुटमित इयं पर्व-ततटी बभूवैष न्यायस्तदिह किमु कुर्वेऽहमधुना ॥ २५ ॥ इति विविधविकल्पान् कल्पयन्मानसान्तः स्तिमितमतिरगाच्छ्री-सूरिराजं प्रणन्तुम् । उभयमभयचित्तस्तद्विरुद्धं मिथोऽसावकथयदथ तस्मै स्मेरचक्षुर्नरेशः ॥ २६ ॥ चिन्तामेतां जहि नर-पते ! ते शुभं भावि सर्वं नाशं यास्यत्यसुखमचिराच्छ्रीजिनेशप्रसादात् । इत्युक्त्वा ते नृपहितकृते मन्त्रशक्त्या मुनीशा बद्ध्वा निन्युर्यवनपमपाकर्त्तुमार्त्तिंजनानाम् ॥ २७ ॥ लब्ध्वा छलं यः समियाय विगाज्जेतुं भवन्तं रिपुराजिकेतुम् । सोऽयं तुरुष्काधिपतिर्नरेशाशंसन्मुनीशो मुदितः स एवम् ॥ २८ ॥ कर्त्तः ! किं विदधे त्वयेति निगदन् दन्तैर्निजोष्ठं दशन् पश्यन् सूरिमुखं स खण्डितसुखः प्रोचे तुरुष्काधिपः । मङ्क्षु क्षूनमिदं विहाय नृपते ! मां मोचयातः परं नान्यायं तव मण्डले

खलु पुनर्जीवन् करिष्याम्यहम् ॥ २९ ॥ क्षितिपततिषु मन्ये धन्यमेकं भवन्तं निजनियममुञ्चद्यो न जातेऽपि कष्टे । विदधति धुतविघ्ना यस्य सान्निध्यमेते विततसुकृतकृत्यं कुर्वतः सूरयस्ते ॥ ३० ॥ कौन्तेयोऽत्यजदेकवारमतुलं सत्यव्रतं स्वं पुरा द्यूते हारितभूरभून्नलनृपः पुण्यैकनिष्ठोऽपि च । नात्याक्षीर्विपदर्णवेऽपि पतितो यः स्वं व्रतं साम्प्रतं निर्व्याजं सुकृतोद्यतस्त्वमिव नो जज्ञे परः पार्थिवः ॥३१॥ इति नुतिपरमेनं मेनकानाथतुल्योऽनयदनयविहीनो मन्दिरं स्वं कुमारः । तदनु सरसभोज्यैर्भोजयामास भक्त्या क्वचिदुचितविचारे नैव मुह्यन्ति सन्तः ॥ ३२ ॥ कुमरनृपतिरासामास एतः स तेन स्वसदसि दशदिग्भूपालसम्पूरितायाम् । सति सकलजनौघे विस्मिते विस्मयन्तौ निजसमयसमुत्थां चक्रतुः किंवदन्तीम् ॥ ३३ ॥ अपूर्ववस्तूनि ददौ कुमारस्तस्मै तदानन्दितचित्तवृत्तिः । षण्मासमेषोऽपि नरेशवाक्यादङ्गीचकाराङ्गिदयां स्वदेशे ॥ ३४ ॥ सार्यं मायाविहीनैः पुनरपि पृतनां प्रापितः सूरिवर्यैस्तन्त्रज्ञो मन्त्रशक्त्या पतिविरहमहादुःखदग्धां विदग्धैः । प्रोद्यद्वादित्रवृन्दोत्थितरवनिवहापूरिताशासमूहं चक्रे वक्रेतराशः समजनि जनितानन्दमुच्चैर्महं सः ॥ ३५ ॥ प्रेष्योपायनमेष लेखसहितं हृल्लेखवान् भूभुजे म्लेच्छेशः स्वपुरं परारिमथनः प्रापत्ससैन्यो रयात् । सर्वस्मिन्निजमण्डले विहितवानाखण्डलाभः श्रिया राजाऽतुच्छमहोत्सवं प्रमुदिते तस्मिन् गते वैरिणि ॥ ३६ ॥ कति कुमरनरेशं सूरिराजं च केचित्कति गुरुगुरुशक्तिं पुण्यमन्येऽप्यशंसन् । अजनिषत जनानामेकधर्म्मेऽपि चित्रं प्रमुदपरवशानां तत्र वाचो विचित्राः ॥ ३७ ॥ शान्ते तस्मिन् यवनजनितातङ्कपङ्के विशङ्कमासीच्छक्यं सकलजनतामानसं तत्क्षणेन । मोदन्ते स्माखिलसुमनसो भूरभूद्राजमाना हर्षोत्कर्षं विशदमभवद्राजहंसः सपक्षः ॥ ३८ ॥

॥ इति श्रीकुमारपालचरिते षष्ठसर्गे द्वितीयो वर्गः ॥ २ ॥

अथो कुमारस्य किलास्ति शस्ताशया स्वसा देवलदेविनाम्नी । अगण्यलावण्यगुणानुनके या रूपकान्त्या त्रिदशेशका-
न्ताम् ॥ १ ॥ तामूढवान् प्रौढपराक्रमाढ्यः शाकम्भरीशोऽसमरूपरम्याम् । पित्रोः सतोरेव सतीवरेण्यां पुरा सुतारामिन
नानरेन्द्रः ॥ २ ॥ पतिव्रता तस्य गृहे वसन्ती श्रिया हसन्ती श्रियमन्वहं सा । चित्ते स्मरन्ती निजमेव धन्याऽनैषीद्दिनं
कालमलं सुखेन ॥ ३ ॥ चिक्रीड निर्व्रीडतया तयार्थं सार्कं स शाकम्भरिभूमिपालः । स्वकर्मसत्कार्मणयोगतः सा पतिं
वितेने स्ववशं विदग्धा ॥ ४ ॥ परस्परं तौ कुरुतो नितान्तं रसाभिरामां गुरुसारकेलिम् । क्षणे क्षणे लब्धजयाजयौ प्राक्
हर्षं विषादं भजतश्च किञ्चित् ॥ ५ ॥ आनोनृपः सोऽथ हसन्नवादीन्मदेन सार्द्धं प्रियया तयेति । पश्य प्रयातीं तव सारि-
मेतां रे ! मारयित्वैष निवर्तयामि ॥ ६ ॥ अत्युत्कटं वाक्यमिदं निपीय तनुं धुनाना तमुवाच सापि । किं वारितां मारि-
मिमां करोषि मत्सोदरेणादरतो नरेश ! ॥ ७ ॥ कृतातिवाक्येन ददाति रन्ध्रमुदग्रमेषा खलु जीवहिंसा । न्यवारयत्त्वां
सकलागिलायामितो हितः श्रीकुमरो नरेशः ॥ ८ ॥ क्रीडारसेनापि न वाच्यमित्थं नाथ ! त्वया तथ्यविदा कदापि । कृतं
हसेनापि कुकर्मजन्तुर्भुङ्क्ते च दुःखं बहुधा व्यनक्ति ॥ ९ ॥ पतिं निवार्येति विचारगिरा तेने पुनस्तेन समं स्वकेलिम् ।
पत्नीत्ववशां रचयन् स तस्या भूयस्तथा जल्पितवानकल्पः ॥१०॥ बिभेषि पापाद्यदि नो नरेश ! प्रदत्ततापाश्रितरां परत्र ।
स्फुरत्प्रतापात्सुगृहीतचापात्किं शङ्करो नोऽत्र कुमारपालात् ॥ ११ ॥ सर्वाङ्गिरक्षां रचयन्नयं मे भ्रातापि पशुजीवपितेति
नाम । यो जीवहिंसां वचसापि कुर्यात्तन्निग्रहं शीघ्रमसौ करोति ॥ १२ ॥ आनोनृपः खिन्नमनास्तदानीं चुकोप वाक्या-
नि निपीय तस्याः । परप्रशंसामसहिष्णुरुच्चैरताडयत्तां स्वपदेन दर्पात् ॥ १३ ॥ शिष्टाय दुष्टो विरताय कामी निरागतो

जागरकाय चौरः। धर्म्मार्थिने कुप्यति पापवृत्तिः शूराय भीरुः कवये कविश्च ॥ १४ ॥ आनन्दयन्तं सुजनं त्रिलोकीं गुणैः खलः कुप्यति वीक्ष्य नूनम्। किं भूषयन्तं किरणैर्नितान्तमालोक्य चन्द्रं ग्रसते न राहुः ॥ १५ ॥ विचारयन्ती मनसीति तज्ज्ञा निवारयन्ती श्रवदश्रुवारम्। सा मानिनी मानवनाथमेनं समन्युरुच्चै रुदती वदान्या ॥ १६ ॥ रे रे पामर ! मा मदान्निजपदा किं ताडयस्युच्चकैः श्रीमच्छ्रीकुमरे सुरेश्वरसमे सद्बान्धवे जीवति। नादोत्त्रासितकुञ्जरव्यतिकरे कण्ठीरवे भैरवे सिंहीं कोऽत्र दुनोति निन्दितमना लोके वनं शासति ॥ १७ ॥ त्वच्चेष्टितं वेत्स्यति दुष्टबुद्धे ! मद्बान्धवस्तन्न भविष्यसि त्वम्। अज्ञातवृत्ता विचरन्ति चौरा ज्ञाता नृपैर्यान्ति यमालयं हि ॥ १८ ॥ याहि त्वं च निवेदय द्रुतमिदं वृत्तं च वृत्रद्विषा तुल्यस्याखिलमेव मे त्वदुदितै रण्डे ! प्रचण्डैरलम्। रे रे कः कुमरोऽमरोऽपि समरे स्थातुं न मेऽलंभवेद्भूमीशः खररोषदूषितमनाः स प्रोचिवान् तामिति ॥ १९ ॥ तेनापमानेन कृतेन पत्योच्चैर्वायुनेवाप लतेव कम्पम्। निवारयन्ती श्रवदश्रुवारं सस्मार सारं च पितुर्गृहस्य ॥ २० ॥ सारं समादाय निजं रयेण सा बन्धुरं बान्धवगेहमागात्। धवे विरुद्धे सति सद्वधूनां पितुर्गृहं स्याच्छरणं हि शश्वत् ॥ २१ ॥ श्रीमान् कुमारोऽपि ननाम कामं भक्त्या स्वसारं स्वयमागतां ताम्। विनानकं चागमनस्य हेतुमेतामपृच्छद्द्विपरिच्छदः सन् ॥ २२ ॥ सा स्वःश्रवन्तीसदृशी दृशाश्रुपूरं श्रवन्ती सुदती रुरोद। दीनानना तत्सकलं नृपाय निवार्यमाणाय शशंस वृत्तम् ॥ २३ ॥ तं तं तेन कृतं कृतान्तसदृशेनागश्च यं शृण्वतो रोषेणारुणदारुणाक्षियुगलस्योद्धोत्थरोमावलेः। शत्रूणामनिशं विनाशपिशुनः केतुस्ततानास्पदं तस्यास्ये भ्रकुटिच्छलेन विपुले व्योम्नीव भूमीपतेः ॥ २४ ॥ निवार्य चैतामुचितैर्वचोभिर्दीनं वदन्तीं तरसा स्वसारम्। दिदेश

देशाधिपतीनशेषान् स्वसैन्यसज्जीकरणाय राजा ॥ २५ ॥ अथ जनपदरक्षाहेतवे मन्त्रपूर्वं मतिततिसहितं स्वं मन्त्रिणं तत्र मुक्त्वा । नृपतिशतसमेतः सैन्यमादाय सर्वं प्रबलदलबलिष्ठस्तं विजेतुं स पस्मात् ॥ २६ ॥ शेषो भुवःशिरोभरः सम-भयभाराक्रान्तो न भूः सैन्योद्धूतरजोभरप्रातिपिहितभानुर्न्यरोधि दृष्टोऽयं निजम् । नस्ता दिक्करिणो रजोभिरभितो व्याप्तं नभो-मण्डलं तस्येत्थं चलता बलेन विदधे त्रैलोक्यमप्याकुलम् ॥ २७ ॥ निजविषयमतीत्य प्राप तावत्प्रदं तत्कटकमापदितां वैरिदेशं क्रमेण । अभिमुखमथ यानी तस्य शाकम्भरीशः प्रबलबलयुतो द्रागागमो वाजिराजी ॥ २८ ॥ अथ नृपतिनि-देशादेशमासाद्य तूर्णं सजलजलदगम्भीरवादिन्द्रोगरञ्जम् । निकटपटकुटीभिस्तत्क्षणं ताडिताभिरद्भुरदङ्गरङ्गोऽकाऽकोलकनिर्गं जनानाम् ॥ २९ ॥ असङ्ख्यमालोक्य बलं नृपस्य वैरिव्रजस्तं परिभाव्य सैन्यम् । दानादिना भेदविधानभूतो राजा परावर्ति-तवान्नपौषम् ॥ ३० ॥ प्रातः समादाय समग्रसैन्यमनन्यशौर्यो निजबाहुलोकम् । तं वैरिणं जेतुमनाः कुमारः संग्राम-भूमिं सहसा जगाम ॥ ३१ ॥ तत्राययौ सोऽपि रणोत्कण्ठितः शाकम्भरीशः स्वबलेन साकम् । सैन्यद्वयं युद्धनिबद्धबुद्धि तद्वीक्ष्य चुक्षोभ जगत्समस्तम् ॥ ३२ ॥ हेषाभिर्नरवाजिनां च करिणां सद्बृंहितैः संहितैः चीत्कारैरथ निर्मितैरथ शिशो-वादित्रनादैर्भृशम् । पत्तीनां बहुलैरकोमलतरैः कोलाहलैश्चापि तत्त्रैलोक्यं बधिरीचकार सकलं सैन्यद्वयं तत्क्षणात् ॥ ३३ ॥ नृत्यद्योधकबन्धरुद्धवसुधं युद्धं तदासीत्तयोर्भीमवीरनिनादवादितलसद्ब्रह्माण्डभाण्डं क्षणम् । यस्मिन् विस्मित-मानसा इव चलत्कुटाग्रदम्भात्तदा धुन्वन् स्वानि शिरांसि पर्वतचया सम्प्रेक्ष्यमाणा इव ॥ ३४ ॥ निकटकटकयुद्धे सोर-चक्षुः कुमारो निघटितमथ दीनो राजकं स्वं ददर्श । अहह किमिदमासीत्किं भवेच्चिन्तया वा भवति न खलु मिथ्या कर्म-

रेखेति दध्यौ ॥ ३५ ॥ ध्यायन्नेवं नृपतिरवदत्सादितं सादहीनो जेतुं शत्रुं स्वयमिति पुरः सिन्धुरं प्रेरयेति । स्वाम्यादेशे सपदि विहिते तेन शाकम्भरीशं भूपः प्रापन्निजभुजबलैर्वैरिवारं निहत्य ॥ ३६ ॥ तत्रासौ निजघान शत्रुनिचयं प्राणापहैः पत्रिभिः सूर्यैः स्वैः किरणोत्करैरिव तमोव्रातं शितैस्तत्क्षणात्। तस्यैकस्य पुरो न तेऽलमभवत् स्थातुं समस्ता द्विषो वेगोत्पाटितकुञ्जरस्य समरे वायोस्तृणौघा यथा ॥ ३७ ॥ यममिव तमुदीक्ष्येर्ष्यालवः क्षोणिपाला हरिमिव च शृगाला नालमासन्नियोद्धुम्। सुभटमुकुटरत्नं छाहडस्तस्य मन्त्री ध्वनितसकलदिक्कं सिंहनादं मुमो च ॥३८॥ तस्मिन् श्रोत्रपथं गते हतधियः सर्वेऽपि नेशुर्गजा यावत्तावदुपायविन्निजगजं कर्तुं स्थिरं श्रीनृपः। चिक्षेप श्रवसोरसौ निजपटीं द्राक् पाटयित्वा स्फुटं बाणौघेन च तं जघान सहसा सार्द्धं रिपोः स्वं मुदा ॥ ३९ ॥ दृष्ट्वा स्वं सचिवं हतं हतमतिः शाकम्भरीशो भृशं क्रोधान्धः स्वयमागमन्नरवरं हन्तुं हुताशप्रभः। शस्त्राशस्त्रि तयोर्बभूव सुचिरं युद्धं समृद्धं तदा क्ष्मापत्योरजनिष्ट येन रजनीतुल्यं दिनं सर्वतः ॥ ४० ॥ श्रीमान् श्रीकुमरः स्वरोपनिकरासारेण सम्पूरयन् सर्वाशारिपुसिन्धुरं निहतवान् क्रोधोद्धुरो बन्धुरम्। मङ्क्षु च्छिन्नपलाशिवत् क्षितितले शाकम्भरीशोऽपतन्नेशुस्तत्पृतनाचराश्च निहतं मत्वा निजं स्वामिनम् ॥ ४१ ॥ जितजितमिति बाढं सैनिकाः संवदन्तो नृपमथ परिवव्रुर्धिष्ण्यजाता इवेन्दुम्। युगपदजनि सैन्ये तत्र चैकत्र राजा जयवति हतशेषेऽमावशी चापरस्मिन् ॥ ४२ ॥ एतस्मिन् समये कुमारनृपतिर्दत्त्वाशु जम्पां रिपुं जग्राहोग्ररुषेत्युवाच चतुरः केशेषु चाक्रम्य तम्। रे रे किं विदधेऽपराधनिकरं जामेर्ममारं भवान् मारिं किं च निवारितां वदसि रे त्वं नित्यदर्पातुरः ॥ ४३ ॥ आक्रान्तः कुमरेण रेणुसदृशं कृत्वा मुखं निःसखः सोऽस्थाद्दुःस्थमना निरस्तनिजदोर्दर्प

प्रकर्षस्तदा । क्रान्तः केशरिणा करीव सकलं पश्यन् दिशां मण्डलं ताक्ष्र्येणेव भुजङ्गमः समसुचत् स्वाशां नरेशोऽखिलाम् ॥ ४४ ॥ तावत्तत्र पवित्रशीलकलिता चित्रं सृजन्ती परं त्रस्तैणीनयना ययौ नययुता सा तस्य जाया रयात् । भ्रातर्देहि सदेहितप्रद ! परां मे भर्तृभिक्षामिमां धृत्वाऽग्रेऽञ्चलमित्ययाचत सती तं रोचमाना ह्रिया ॥४५॥ तमथ मथितमानं जामिवाक्येन तेनामुचदुचितवचोज्ञोऽङ्गीकृताज्ञं कुमारः । विदधति न महान्तः प्रार्थनाभङ्गमङ्गीकृतमपि विकृतिं नो याति तेषां कदाचित् ॥ ४६ ॥ रत्नानां निकरं चकार रजसा जित्वारियादोव्रजं स्वीचक्रे विजयश्रियं निजभुजैर्निर्मथ्य युद्धार्णवम् । एकं हारि विषं ददौ स रिपवे संहारिणे केवलं श्रीकान्तः पुरुषोत्तमो वनरुचिर्जिष्णुर्बभौ विष्णुवत् ॥४७॥ सैन्यस्थानमुपेयिवानथ नृपः संशोध्य युद्धाङ्गणं प्रारब्धोत्सवसुन्दरं निजचमूमादाय हर्षान्विताम् । पत्नीं प्रेमवचोभिरादरतया तां स प्रसाद्यागमद्भूमीपालनिदेशतो निजपुरीं शाकम्भरीशः पुनः ॥ ४८ ॥ कुर्वन्नुर्वीवलयमखिलं जैनधर्म्मानुरक्तं त्यक्ताकृत्यो निजभुजवलैर्भञ्जयन् वैरिवर्गम् । स्वाज्ञां मान्यां नृपतिनिवहैः स्थापयन्पापहीनस्तेने मेनापतिमतिरसौ दिग्जयं निर्विलम्बम् ॥ ४९ ॥ केचिद्वाजिचयं परे करिभरं केचिद्धिरण्योत्करं केचिद्रत्नपरम्परां कति रथान् केचिच्च शस्त्रव्रजम् । तस्मै दिग्जयकारिणे नृपतयोऽदुः प्राभृते भक्तितस्तेभ्यो मानममानमेष च कृती तन्निष्क्रये दत्तवान् ॥ ५० ॥ करिनिकरमिभारिर्भानुमानन्धकारं जयति समिरभारो यावता वा तृणौघम् । सकलरिपुसमूहं तावतैवैष जित्वा निजपुरममरर्द्धिस्पर्धि चागात्क्रमेण ॥ ५१ ॥ विशति नभसि यद्वच्चन्द्रमा धिष्ण्यपङ्क्तौ हरिरमरपुरीं वा शङ्करः शैलराजम् । स्वपुरमपरिभूतो वैरिभिर्भूरिशोभमविशदतिमहेनासौ तथा मेदिनीशः ॥ ५२ ॥ आज्ञावर्तिषु मण्डलेषु विपुलेष्वष्टादशस्वाद-

रादब्दान्येव चतुर्दशप्रसृमरां मारिं निवार्यौजसा । कीर्त्तिस्तम्भनिभाँश्चतुर्दशशतीसंख्याविहारांस्तथा कृत्वा निर्म्मितवान् कुमारनृपतिर्जैनो निजैनोव्ययम् ॥ ५३ ॥

॥ इति श्रीकुमारपालचरिते महाकाव्ये षष्ठसर्गे तृतीयो वर्गः ॥ ३ ॥

तस्मिन् सहस्रार्जुनवद्बलेन जितार्जुने शासति राज्ञि भूमीम् । चक्रे न कश्चित्त्रसजीवहिंसां स्फुरत्प्रतापान्नृपतेर्भयेन ॥ १ ॥ अत्रान्तरे सुंसरनामधेयः सौराष्ट्रदेशाधिपतिस्तरस्वी । दुष्टः सुगुप्तं सुरपत्तनेशो जघान जिह्वावशगोऽजमेकम् ॥ २ ॥ एनः कृतं छन्नमपि स्फुटं स्यान्न ज्ञातवानित्यतिमोहितः सः । विधौ विरुद्धे सति वा नराणां शुद्धापि बुद्धिः खलु याति नाशम् ॥ ३ ॥ विज्ञातवांस्तत्र शिरोवतंसस्तच्चेष्टितं श्रीकुमरः समग्रम् । हालाहलं पीतमिहातिगुप्तं चिह्नैः स्वयं स्यात्प्रकटं क्षणेन ॥ ४ ॥ तन्निग्रहार्थं गुरुविग्रहेण प्रैषीत्स राजोदयनं ससैन्यम् । गच्छन्नदीपूर इवैष वेगात्क्रमाद्द्विषन्मण्डलमाससाद ॥ ५ ॥ अत्युद्धरे युद्धभरे भटानां नूनं भवेज्जीवितसंशयोऽत्र । वाञ्छन्ति यत्ते मरणं जयं वा स्वस्यारिसार्थान्न कदापि भङ्गम् ॥ ६ ॥ तस्मादिहामुत्र च सौख्यहेतुं विधाय यात्रां विमलाचले द्राक् । सङ्ग्राममुग्रं रिपुणा विधास्ये तत्रेति मन्त्री मनसा निदध्यौ ॥ ७ ॥ सुधीरधीर्वीरपुरे विमुच्य निजां चमूं वीरशताभिरामाम् । स्वयं ययावल्पपरिच्छदेन नरर्षभः श्रीऋषभं प्रणन्तुम् ॥ ८ ॥ सिद्धाचलं प्राप्य विशुद्धचित्तो भक्त्यानमत् स प्रथमं जिनेशम् । ददौ च हर्षाश्रुततिच्छलेन जलाञ्जलिं भूरिभवभ्रमाय ॥९॥ वासांसि वेगात्परिधाय मन्त्री धौतानि पूतानि धुतान्यचित्तः । रोमाञ्चितोऽर्चामृषभस्य हर्षादष्टप्रकारीं

रचयाञ्चकार ॥ १० ॥ कृत्वा कृतार्थं जिनपूजनेन जन्म स्वकीयं सुकृतैकचित्तः । निर्वातदेशस्थितदीपवत्स समाधिना निश्चलतामवाप ॥ ११ ॥ आगत्य गत्वा द्रुतयाखुरेक इतस्ततस्तत्र चलन् जवेन । नक्षत्रमालास्थितदीपवर्त्तिमपाहरत्तस्कर-वत्तदानीम् ॥ १२ ॥ तद्वीक्ष्य खिन्नः स्वसमाधिभङ्गात्तां त्याजयामास स मूषकास्यात् । सुदर्शनो निश्चलदर्शनेन चित्तेन दध्याविति दीर्घदर्शी ॥ १३ ॥ अहो ज्वलन्ती यदि याति वर्त्तिरूर्द्ध्वं हृता मूषकसञ्चयेन । तद्दह्यते काष्ठमयं रयेण चिर-न्तनं चैत्यमिदं मुधैव ॥ १४ ॥ तद्राजकार्यं हि विधाय कार्यं चैत्यं मया शैलमयं रयेण । अभिग्रहानुग्रतरांस्तदर्थे जग्राह शीलप्रमुखान् वहून् सः ॥ १५ ॥ नुत्वा जिनेन्द्रं मुनिरस्ततन्द्रः कृत्वोन्नतिं तत्र च शासनस्य । निजं समागाच्छिविरं वरेण्यः स्मरन् स चैत्योद्धरणं मनोऽन्तः ॥ १६ ॥ वलेन साकं सकलेन कालविचक्षणस्तत्क्षणमेव सोऽगात् । हन्तुं द्विपं तं विषये तदीयेऽमेयप्रतापः सचिवाधिराजः ॥ १७ ॥ श्येनं समभ्येति च मर्तुकामो यथा वराकश्चटकः प्रकोपात् । समा-गमन्मर्तुमनास्तथायं स्वयं वणिग् योद्धुमहो ! मयात्र ॥ १८ ॥ कुर्वन्नवज्ञामिति तस्य गाढं स्पर्द्धापरः सैन्यसमूहयुक्तः । श्रीसुंसरो मत्सरवान् स्वद्रङ्गाद्वहिः सरङ्गात्स समाजगाम ॥ १९ ॥ चम्वोस्तयोर्युद्धमभूतपूर्वमभून्मिथो रोपभृतोरतीव । कृपाणसङ्क्रान्ततनुच्छलेन यद्वीक्षितुं किं रविराजगाम ॥२०॥ परस्परं सङ्गरमङ्गिभङ्गं तौ चक्रतुर्भूपतिमन्त्रिमुख्यौ । तूणी-रवत्प्राणहरैश्च वाणैः सम्पूरयामासतुराशु देहौ ॥ २१ ॥ भिन्नो वाणगणेन भूपतिरथो तत्याज जीवं रणे मन्त्री तस्य चकर्त कर्त्तरिशितैः शस्त्रैः शिरस्तत्क्षणात् । लात्वा तेन समं जयं निजमयं वेगाद्विशोध्याहवं सैन्यस्थानमवाप तापरहितो भिन्नाखिलाङ्गः शरैः ॥ २२ ॥ शतं समा मे समभूत्किलायुर्विद्युल्लतालोलमपि प्रभूतम् । शिष्टानि कृत्यानि कृतानि तानि

श्रीजैनधर्म्मे गदितानि यानि ॥ २३ ॥ न मे विषादो निजनाथकार्ये प्राणैर्गतैरस्ति मनाग्मनोऽन्तः । गुरून्विना यन्मरणं रणेऽत्र तच्चित्रमेतन्नितरां दुनोति ॥ २४ ॥ विचिन्तयन्मन्त्रिवरस्तदैव मूर्छामतुच्छामगमत्क्षणेन । पृष्टः प्रधानैर्निजदुःखहेतुमाचष्ट हृष्टः स पटिष्ठनादम् ॥ २५ ॥ वण्ठं तदा कारितसाधुवेषमानिन्यिरे तेऽन्यमनाप्य साधुम् । आनन्दितः साधुधिया ववन्दे सोऽदाच्च धर्माशिषमाशु तस्मै ॥ २६ ॥ आराधनादि निधनोत्तमकृत्यमेष तत्साक्षिकं सचिवराट् स्वयमेव चक्रे । सस्मार भूरिभववासहरं जिनानां मन्त्रं दुरन्तदुरितच्छिदुरं हृदन्तः ॥ २७ ॥ मन्त्रिन्नर्तिकरं परं मनसि ते किं वर्त्तते शल्यवत् पृष्टस्तेन मुनीश्वरेण सचिवः प्रोचे स मन्दस्वरम् । जातं सर्वमपीप्सितं यतिपते ! निस्सङ्ग ! त्वत्सङ्गमाच्चैत्योद्धारमनोरथो मम परं पूर्णो न शीर्णायुपः ॥ २८ ॥ चिन्तामेतां जहि स हि सुतो वाग्भटोऽस्त्युद्भटस्ते चैत्योद्धारं मम वचनतः कारयिष्यत्यवश्यम् । ते ते तावत्सचिव! नियमा मां भजन्तु त्वदीयास्त्वं धर्मादीन् भज च विसृजान्यत्तमोहेतु कृत्यम् ॥ २९ ॥ तच्छ्रुत्वा श्रमणोदितं श्रवणयोरानन्दसन्दोहदं तां चिन्तां धुतवान् समाधिविधिना धूताघसङ्घो द्रुतम् । ध्यायन्पञ्चनमस्कृतिं निजकृतं गर्हन् समं दुष्कृतं मन्त्रीशः स्वरियाय शर्म्मनिचयं कायं विहायाचिरात् ॥ ३० ॥ संस्कारं सारकाष्ठैरुदयनवपुषो युक्तितोऽन्ये विधाय भूपाः प्रापू रयेण स्वनगरमखिलं तत्समादाय सैन्यम् । ज्ञात्वा वृत्तं कुमारो मृतमिति सचिवं शोचयन् श्यामवक्त्रः प्रोत्फुल्लास्यो जयेनाजयदसिततमामष्टमीं रात्रिमेवम् ॥ ३१ ॥ कुमरनृपतिरुच्चैः पत्तने वैरिशीर्षं श्वपचकरगतं सोऽदर्शयत्तज्जनानाम् । सकलजनसमक्षं जीवरक्षानिमित्तमिति पटुपटहेनाघोषयत्तत्र रोषात् ॥ ३२ ॥ एवं जीवानलमिह मया पाल्यमानानिलायां दुष्टः स्पष्टं विगतकरुणो यो हनिष्यत्यशेषान् । पूर्वं पीडां रिपुयमसमेन

प्रदत्तां मया स भुक्त्वा भोक्ष्यत्यसुखमखिलं रौरवेऽतीवघोरे ॥ ३३ ॥ एवं सज्जयवाहिनीकृतसुखः स्फूर्जत्प्रतापास्पदं श्रीमद्देवसमूहसेवितपदो रम्भाभिरामश्चिरम् । कामं नन्दनतत्परो वरतरं भुञ्जन् सुखं कामजं राज्यं प्राज्यमसौ चकार नृपतिर्न्यायेन नाकीशवत् ॥ ३४ ॥ श्रीरत्नसिंहगुरुपादसरोरुहालिश्चारित्रसुन्दरकविर्यदिदं वितेने । तस्मिन् कुमारचरिते गुरुमारिवारी सर्गः समाप्तिमगमत्किल षष्ठसंख्यः ॥ ३५ ॥

॥ इति भट्टारकश्रीरत्नसिंहसूरिशिष्योपाध्यायश्रीचारित्रसुन्दरगणिविरचिते श्रीकुमारपाल-
चरिते महाकाव्ये षष्ठः सर्गः समाप्तः ॥ ६ ॥ ग्रन्थाग्रं २६७ ॥



## ॥ अथ सप्तमः सर्गः ॥

श्रीमान् कुमारोऽमलमानसाय श्रीवाग्भटायोद्भटविक्रमाय । ददावुदारोत्सवपूर्वमुर्वीवरो वरं मन्त्रिपदं प्रमोदात् ॥ १ ॥ प्रचण्डचण्डांशुसमप्रतापं श्रीआम्बडं दण्डपतिं वितेने । विसादमासाद्य नृपप्रसादं तौ पुष्पदन्ताविव रेजतुः श्राक् ॥ २ ॥ डिण्डीरपिण्डप्रतिमैर्गुणैः स्वैरेतावजेष्टां जनकस्य कीर्त्तिम् । दानादिना तौ जगतीं च पूर्णां द्रागाकृपातां सुकृतव्रजेन ॥ ३ ॥ तावश्विनेयाविव दिव्यदीप्ती परस्परं प्रीतियुतौ कुमारौ । महीमहेन्द्रं स्वकलाव्रजेनारं रञ्जयाञ्चक्रतुरुत्तमेन ॥ ४ ॥ मृतेऽप्यमात्ये नृप ! संयमं नो तत्याज वण्ठोऽशठमानसः सः । प्राप्तं प्रयासेन विनापि चिन्तारत्नं त्यजेत्कः किल कामदायि ॥ ५ ॥ तद्वासनावासितचित्तवृत्तिर्मुग्धोऽपि शुद्धं व्रतमावभार । चङ्गात्कथं चन्दनवृक्षसङ्गान्न चन्दनाः स्युस्तरवः

परेऽपि ॥ ६ ॥ अभिग्रहैस्तैर्ग्लपिताङ्गयष्टिर्मुमुक्षुवेषं स वहन्नशेषम्। अगादगारं सचिवस्य तस्य शस्याशयो वण्ठमुनिः क्रमेण
॥ ७ ॥ तौ मन्त्रिणौ पितृसमाधिहेतुं तं वन्दयामासतुरादरेण। विद्वांश्च कस्तं मनुते मनुष्यममानयद्यं जनकः स्वकीयः
॥ ८ ॥ बभूव वण्ठोऽपि स भूपपूज्य इहास्ति यत्संयमसंगमेन। विद्धं न किं सिद्धरसेन ताम्रमियर्त्ति सद्यस्तपनीयभावम्
॥ ९ ॥ तच्चैत्यकृत्यादिसमस्तवृत्तं न्यवेदयद्वाग्भटमन्त्रिणे सः। अलातसलीलं दलितान्यचिन्तः स तांस्तदर्थे नियमान्मनीषी ॥ १० ॥ तदैव चैत्योद्धरणाय मन्त्री सोऽप्रेषयत्सूत्रभृतां शतानि। विनश्वरेऽस्मिन् जगति प्रमादं कुर्वन्ति तज्ज्ञा नहि पुण्यकृत्ये ॥ ११ ॥ कुर्वाणास्ते चैत्यकर्म्माण्यजस्रं शिल्पिव्रातानश्रमं किञ्चिदापुः। तेभ्योऽमेयं स्वापतेयं स यच्छन् लेभे संख्यां स्थूललक्षो न मन्त्री ॥ १२ ॥ प्रासादोऽभूद्वर्षयुग्मेन पूर्णस्तस्मिन् शैले मन्त्रिहर्षेण साकम्। शश्वत्पुण्योपार्जनासक्तचित्तैः प्रारब्धं किं नोत्तमैर्याति सिद्धिम् ॥ १३ ॥ प्रासादः समभून्मनोहरतरस्ते सिद्धशैलेऽखिलो दिष्ट्या हृष्टमनोभिरेत्य तदिहास्माभिर्द्रुतं वर्ध्यसे। एवं गेहसमाजभाजमतुलव्यापारिमालावृतं चत्वारश्चतुरास्तदा वरनरा मन्त्रीश्वरं प्रोचिरे ॥१४॥
तेभ्योऽदाद्धेमजिह्वाः स सचिवतिलकः पञ्च पञ्च प्रमोदाद्रोमाञ्चेनाञ्चिताङ्गः सदसि विरचयन् विस्मितं मानपूर्वम्। यच्छन् पर्यन्यवद्यः सति निजसमये नो विधत्ते हि संख्यां विष्वक् सम्पूरिताशं तमिह सुमनसो दानशौण्डं वदन्ति ॥१५॥ प्रवर्तमाने सचिवस्य गेहे महोत्सवे स्फारवरे तदानीम्। दूतः समागत्य परोऽतिमन्दं प्राहेति चैत्यं निपपात वातात् ॥ १६ ॥
अकालविद्युत्पतनोपमेयं श्रुत्वा न चुक्षोभ वचस्तदा सः। कल्पान्तवातैरपि किं सुराद्रिशृङ्गं कदाचिल्लभते प्रकम्पम्
॥ १७ ॥ दूताय पूर्वद्विगुणां सुवर्णजिह्वामदात्तीक्ष्णमतिः स मन्त्री। दुःखे सुखे वाप्यमलस्वरूपां त्यजन्ति न स्वां प्रकृतिं

महान्तः ॥ १८ ॥ ये धर्मधामात्र विलोकयन्ति स्वकारितं तान्नृप वेद्मि धन्यान् । येषां तु तत्तिष्ठति दीर्घकालं ते वन्दनीया जगतोऽपि मन्ये ॥ १९ ॥ पपात चैत्यं मयि विद्यमाने सत्सर्वशक्तौ तदभूद्वरेण्यम् । मृतेऽपतिष्यद्यदि कस्तदानीमकारयिष्यत्क्षितिमण्डलेऽस्मिन् ॥ २० ॥ तत्तत्र गत्वा महतोद्यमेनाहं कारयिष्ये पुनरेव चैत्यम् । त्यजन्ति ये विघ्नहता निजानि कृत्यानि हीनाः खलु कीर्त्तितास्ते ॥ २१ ॥ आरभ्यते न खलु विघ्नभयेन नीचैरारभ्य विघ्ननिहता विरमन्ति मध्याः । विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारब्धमुत्तमजना न परित्यजन्ति ॥ २२ ॥ एवं विचार्य सचिवः सुचिरं मनोन्तरापृच्छ्य भूपमचलत्स्वबलेन साकम् । शत्रुञ्जयं कतिपयैरयमाप्य घस्रैरस्थापयन्निजपुरं तदुपत्यकायाम् ॥ २३ ॥ आकार्य सर्वानथ शिल्पिमुख्यान् पप्रच्छ तच्चैत्यनिपातहेतुम् । अदोऽवदंस्ते भ्रमतीमुखेन वायुः प्रविष्टोऽत्र बहिर्न याति ॥ २४ ॥ श्रीपुण्डरीकाचलमौलिकल्पं पतत्यदश्चैत्यमितः क्षणेन । हीने भ्रमत्या विहिते विहारे निःसूनुता कारयितुः कृतं स्यात् ॥ २५ ॥ वचांसि तेषां सचिवो निपीय विचारयामास हृदा तदेति । अहो ! महीयो द्वयमेतदत्र मिथो विरुद्धं किमु तत्करोमि ॥ २६ ॥ कालेन वंशः कियतापि नाशं स्वयं समासादयतीह विश्वे । अहो ! इहामुत्र च सातहेतोर्न शाश्वतः कोऽप्यपरोऽस्ति धर्म्मात् ॥ २७ ॥ तद्वंशचिन्तामखिलां विहाय करोमि तीर्थं निरुपद्रवं द्राक् । नामास्तु मे श्रीभरतादि पङ्क्तौ सनातनः स्तान्मम धर्मवंशः ॥ २८ ॥ ध्यात्वेति सोऽपूरयदन्तरालं भीतेर्भ्रमत्याश्च शिलासमूहैः । यथा यशोभिर्भुवनं समस्तं चात्मानमत्युज्ज्वलपुण्यपूरैः ॥ २९ ॥ बभूव वर्षत्रितयेन कुम्भावधीद्धरूपं जिनमन्दिरं तत् । विधीयमानं खलु सत्त्ववृद्धैर्न याति सिद्धिं किमु कार्यमत्र ॥ ३० ॥ चतुर्विधं सङ्घमथो हताघमजूहवत्पत्तनतः स मन्त्री । श्रीस-

त्कुमारं गुरुणा च साकमाकारयद्दारितपापपङ्कम् ॥ ३१ ॥ आगत्य त्वरितं कुमारनृपतिः श्रीवाग्भटाख्ये पुरे तस्थौ सुस्थमना बभूव नितरां तद्वीक्ष्य चैत्यं महत्। तत्रैकं कलधौतकुम्भकलितं पुण्याय पित्रोः परं चैत्यं कारितवान्निवारिततमोभारं धरित्रीपतिः ॥ ३२ ॥ भूमीशः समहोत्सवं जिनगृहे तस्मिन्नमेयं प्रभं वामेयं समतिष्ठपच्छुभदिने सद्दिष्टपश्रीप्रदम् । सन्तोऽन्यार्थपरायणा अपि भृशं स्वार्थं सदा कुर्वते तीर्थं प्राप्य परं करोति न कृती को वा कृतार्थं धनम् ॥ ३३ ॥ प्रासादे शरदिन्दुसुन्दरतरे तस्मिन्नवीने नवामादीशप्रतिमामनन्तमतिमान् संस्थापयन्मन्त्रिराट् । मम्माणीयखनीभवं परिकरं कर्पूरपूरोज्वलं दध्रे तत्र नवं यशश्चयमिव स्वं पिण्डतां सङ्गतम् ॥ ३४ ॥ वर्षै रुद्रार्कसंख्यैः स्वजनकवचसा विक्रमार्कात्प्रयातैर्यातैनाः सिद्धशैले जिनपतिभुवनं वाग्भटः प्रोद्दधार । कोटीस्तिस्रो विविच्याव्ययपदरसिकस्तत्र लक्षत्रयोनाः स्वर्णस्योपार्जयत्सोऽचलममलमलं धीसखः सिद्धिसौख्यम् ॥ ३५ ॥ जन्मव्याधिजरादिनीरनिभृते संसारनीराकरे सिद्धाद्रिर्वरयानपात्रवदनात्सन्तारयन्नाश्रितान् । कूपस्तम्भनिभं बभौ जिनगृहं तस्मिन् स्थितं निश्चलं नेतुं तत्र शिवं बभार वृषभो निर्यामकत्वं कृती ॥ ३६ ॥ मन्त्रीशः शरदिन्दुदीधितिनिभं चैत्योपरिष्टाद् ध्वजं स प्रादान्मुदितो विधाय विधिना पूर्वं प्रतिष्ठामहम् । तस्मिन्नर्थिललाटपट्टलिखितां दैवीं लिपिं निष्फलां चक्रे दानगुणेन मानववरो दारिद्र्यमुद्राभिदा ॥ ३७ ॥ निखिलजनपदेभ्योऽभ्यागतैर्नाकितुल्यैर्विमलगिरिरजैषीत्स्वर्गिशैलं जनौघैः । सचिवपतिरपारं तत्र सारं स यच्छन् स्फुटमभिमतदातॄन् कल्पवृक्षान् जिगाय ॥ ३८ ॥ क्वणजितकलकण्ठ्यः कम्बुकण्ठ्यो नितान्तं गतिविजितमराल्यो व्यालपन्मङ्गलानि । अविरलकलशोभं नृत्यमातेनुरुच्चैरतिसुरवरवध्वो वारवध्वः सुबद्धम् ॥ ३९ ॥ कर्पूरागुरुमिश्रितैः

कति जना हृन्नन्दनैश्चन्दनैर्गन्धान्धीकृतषट्पदैर्जिनपतिं पुष्पैः परेऽपूजयन् । नैवेद्यैर्हृदयङ्गमैरगमयन्नाशं निजांहः परेऽगृह्णन् जन्मफलं फलैः कलतरैरन्ये पुरो ढौकितैः ॥ ४० ॥ राजा रैवतकाचलं निजबलं लात्वा ययौ मन्त्रिणा सार्द्धं नेमिजिनं विनन्तुमितरत्कृत्यं विधायाखिलम् । मार्गं दुर्गममेष वीक्ष्य तरसा पद्यां सुखारोहणां तत्रावन्धयदुच्चकैः परकृते कुर्वन्ति किं नोत्तमाः ॥ ४१ ॥ मत्वा सत्वरगत्वरं क्षितितले वित्तं समस्तं कृती सिद्धाद्रावतनोद्व्ययं सचिवराड् धन्यः स एको ध्रुवम् । यद्वा यद्विषये भवन्ति भुवनस्यानन्ददायीन्यहो ! कृत्यानि स्तुतिभाजनं स कुमरः क्ष्मापालचूडामणिः ॥ ४२ ॥ एवं वदन्तो मुदिताशयास्ते नत्वा जिनेशं जनतासमूहाः । जनुः कृतार्थं खलु मन्यमाना निजं निजं धाम ययुः प्रमोदात् ॥ ४३ ॥

॥ इति श्रीकुमारपालचरिते सप्तमसर्गे प्रथमो वर्गः ॥

---

श्रीरैवताद्रौ कुमरो विधाय यात्रामथो पत्तनमाजगाम । कुर्वत्सु कार्यं किल सत्तमेषु स्पृहासमानो हि भवेद्विलम्बः ॥ १ ॥
अथाम्बडो वाग्भटकारितं तं शत्रुञ्जयोद्धारमवेक्ष्य दक्षः । उद्धर्तुकामः शकुनीविहारं ययौ पुरं श्रीभृगुकच्छसंज्ञम् ॥ २ ॥
किलास्य मातुर्वचनं न कालाद्वहोर्विसस्मार बुधोत्तमस्य । अङ्गीकृतां विश्वजनाय वृष्टिं विस्मारयेत्किं जलदश्चिरेण ॥ ३ ॥
शुभे मुहूर्ते सचिवः स गर्त्तमखानयत्पादकृते गरिष्ठम् । विलम्ब्यमानं खलु पुण्यकार्यं न याति सिद्धिं घनविघ्नरुद्धम् ॥ ४ ॥
अपूरयन्मत्सरतो रजन्यां तत्सैन्धवा नाम सुरीषु रौद्रा । किमेतदेवं सचिवः प्रभाते स चिन्तयामास निरीक्ष्य तच्च ॥ ५ ॥
तच्छोधनार्थं सचिवः स भूयो दिदेश भृत्यानसमानसत्त्वः । सूरीकृतोत्पातवशेन तावत्ते द्राग् व्यपद्यन्त विशोधयन्तः

पाल-
ान्ये-
॥

॥ ६ ॥ निवासपीठे शठदेवतानां चक्रेऽत्र केनापि सुरेण विघ्नः । ध्यात्वेति तत्प्रीतिकृते प्रभूतमकारयच्छान्तिकमेष तत्र
॥ ७ ॥ तस्मिन् कृते काचिददृश्यरूपा देवी जगादामृदुनादमेवम् । नारीनृरूपं मिथुनं यदीह निहंसि तत्कार्यमिदं भवेत्ते
॥ ८ ॥ निपीय तां वाचमवाच्यरूपां दधौ हृदीदं सचिवाधिराजः । मिथ्यादृशो देवजनङ्गमाभान् धिगीदृशान् दुष्टतरान्
सुरान् हा ॥ ९ ॥ जुहोमि जीवान् जिनधर्मविज्ञोऽमीषां वचोभिः किमु निर्दयानाम् । विमानिताश्चैत्यममी विधातुं
दास्यन्ति मह्यामिह नो हि मह्यम् ॥ १० ॥ हत्वात्मानं तदिह निखिलान्निर्जरांस्तोषयित्वा कार्यं सिद्धिं द्रुततरमिदं प्रापया-
म्येष धर्मम् । नूनं प्राणागमनमनसोऽमी गमिष्यन्ति कालात्तस्मादेभिः स्थिरमतिचलैः पुण्यमत्रार्जयामि ॥ ११ ॥ गर्त्ते
तस्मिन् यममुखसमे सानुकम्पः स झम्पां निष्कम्पान्तः सरभसमदाद्धार्यया सार्द्धमुच्चैः । हाहाकारं खरतरगिरा चक्रिरे
तत्र लोकाः प्रान्तं प्राप्ते सति सति नरे को न दुःखी भवेद्वा ॥ १२ ॥ समुद्यते साधुपरार्थमेव मित्रे गते तत्र तदास्तदेशम् ।
सच्चक्रमाक्रन्दपरं रुरोद तमोऽवलिप्तेव बभूव पृथ्वी ॥ १३ ॥ अथान्तरिक्षान्तरिता तमाह सा व्यन्तरी सत्त्वगुणेन तुष्टा ।
वरं वृणु त्राणनिधे ! विधेहि मा साहसं विस्मयकारि विश्वे ॥ १४ ॥ भवत्परीक्षार्थमकारि सर्वमेतन्मया मायितयात्र
कर्म्म । त्वमेव देवासुरमानवानां सत्त्वेन मन्त्रिन् ! वितनोषि चित्रम् ॥ १५ ॥ एवं वदन्ती च मुदं ददाना देवी तदा तं
विदधेऽक्षताङ्गम् । स्यात्साहसं यस्य नरस्य शस्यं तस्यात्र सेवां रचयन्ति देवाः ॥ १६ ॥ विजेतव्या लङ्का चरणतरणीयो
जलनिधिर्विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः । तथाप्याजौ रामः सकलमवधीद्राक्षसकुलं क्रियासिद्धिः सत्त्वे
वसति महतां नोपकरणे ॥ १७ ॥ भवाजेयः सर्वैरहितनिवहैस्त्वं भुवि सदा कुरुष्व प्रासादं विसृज निजसादं पुनरिदम् ।

सुरी प्रादुर्भूत्वा प्रवरमिति दत्त्वा निजवरं धुनाना शीर्षं स्वं सपदि दिवि सान्तर्हतिमगात् ॥ १८ ॥ अबन्धयत्तत्र स पीठबन्धं धर्म्मद्रुमस्थानमिव प्रमोदात् । अदाद्विहारोद्धरणाय वित्तमल्पेतरं शिल्पिगणाय मन्त्री ॥ १९ ॥ अचीकरच्छ्रीशकुनीविहारं दृषन्मयं वर्षयुगेन मन्त्री । भवेद्विलम्बः किमु तत्र कृत्ये यस्मिन् सुराः स्युर्वरदा नराणाम् ॥ २० ॥ चैत्यप्रतिष्ठां स विधातुकाम आकारयद्भूपमथो ससूरिम् । विधाय पुण्यानि घनानि सन्तस्तल्लोभवन्तो नहि यान्ति तृप्तिम् ॥ २१ ॥ अतिष्ठिपत्तत्र कृतप्रतिष्ठां श्रीसुव्रतस्य प्रतिमां स लेप्याम् । वर्षैश्च हर्षाद्धनवद्धनौघैर्विश्वाश्रितं तापमपाचकार ॥२२॥ महामहे तत्र समुज्ज्वलानि नार्यो जगुर्मञ्जुलमङ्गलानि । वादित्रवृन्दोदिततारनादैर्ब्रह्माण्डभाण्डं भृतवद्व्यराजत् ॥ २३ ॥ ननृतुरमृतभोज्यस्त्रीसमा वारनार्यः सरभसमतितुष्टास्तुष्टुवुर्वन्दिनस्तम् । ददुरतिरुचिदानं याचकेभ्यो जनौघा विदधुरधिविहारं हारिहल्लीसकानि ॥ २४ ॥ सचिवपतिरथो स्वं मन्दिरं मार्गणौघैरघरहितमनाः सोऽमोपयद्धोपपूर्वम् । तदपि वितरणेच्छा नास्य शान्तिं प्रपेदे जगति न खलु चेतो जातु तुच्छं सतां स्यात् ॥ २५ ॥ ददौ पताकां कृतपातकान्तां चैत्योपरिष्टाद्विहितप्रतिष्ठाम् । व्याजेन तस्या भुवनोपरि स्वं चकार मन्त्री रचितोरुकृत्यम् ॥ २६ ॥ छलेन केनाप्यरिणा शिरोऽपि स्वं प्रार्थितो दास्यति दानशौण्डः । नृपो विशङ्क्येति तदा दधार तं वाहुदेशे वहुमानपूर्वम् ॥ २७ ॥ स्नात्रादिकृत्यानि विधाय कर्त्तुं नीराजनां यावदभूत्स सज्जः । वैतालिकः कालविदेत्य तावत्पपाठ कश्चित्पटुवागिति द्राक् ॥ २८ ॥ मुनिसुव्रत ! सुव्रतगरिष्ठ ! हरिवंशसमुद्भव ! सजलजलदसच्छायकाय ! सन्मृष्टपुनर्भव ! जातापायकषायसैन्यदृढसर्प्प ! परन्तप ! । तपसार्जितसज्ज्ञान ! रचितपरमात्मलसज्जप ! भृगुकच्छपुरस्थित ! विंशतितमतीर्थङ्कर ! मन्मथमथन ! त्वं दुःखजलधिपारं

गमय भक्तजनानिह शुभकथन ! ॥ २९ ॥ यच्छन्तु तुभ्यं कलमङ्गलानि श्रीसुव्रताङ्घ्रिप्रभवा मयूखाः । पीयूषधामोज्झकरादिधाम येषां पुरः शान्तिमियर्ति कामम् ॥ ३० ॥ हिरण्यलक्षं विदुषे स तस्मै ददौ तदौचित्यविदामधीशः । दाता स किं योऽर्थिजनाभिलाषं तूर्णं प्रपूर्णीकुरुते न दानैः ॥ ३१ ॥ श्रीमान्राजपितामहो जिनपतेः कृत्वा स नीराजनां श्रीसङ्घं समभोजयन्निजगृहे भक्त्या वियुक्तोंऽहसा । सद्वस्त्राभरणैरभूषयदिमं मान्यः सतामादराद् वित्तं पात्रनियोजनेन सुकृती चक्रे कृतार्थं निजम् ॥ ३२ ॥ सत्कोटिरसमः स्वकोटियुगलं स्वःकोटिमिच्छन्नयं मन्त्रीशस्त्वकरोद्व्ययेऽव्ययमतिस्तस्मिन्महे हारिणि । दृष्ट्वा चेष्टितमेतदीयमखिलाः प्रापुर्जना विस्मयं को वा नाद्भुतदर्शनेन भुवने प्राप्नोति चित्रं नरः ॥ ३३ ॥ प्रापच्छ्रीकुमरो महेन महता श्रीपत्तनं सत्तमं चित्ते तच्चरितं चमत्कृतिकरं सर्वं स्मरन्नञ्जसा । तस्मिन्नेव दिने समेत्य नृपतिं प्रोचे चरोऽन्तःसभं प्राप्तः प्रान्तदशां स चास्ति सचिवः केनापि दोषेण हा ॥ ३४ ॥ श्रवणविषसमं सोऽचीकथत्तद्गुरुभ्यः शठसुरविहितं तेऽवूबुधन् दोषमाशु । ययुरथ निजशक्त्या साधुनैकेन सार्द्धं सचिवहितकृते ते तत्र रात्रौ मुनीन्द्राः ॥ ३५ ॥ निखिलशठसुरीणामीश्वरीं तेऽनुनेतुमगुरनघचरित्राः सैन्धवां शुद्धचित्ताः । दलितसकलविघ्नं सूरिमन्त्रं स्मरन्तः सपदि विदधुरुच्चैस्तत्पुरो ध्यानमुद्राम् ॥ ३६ ॥ हुङ्कारं दधती मुखेन मुखरा हुङ्कारपूरेण सा घोरां स्वां रसनां तदाविरकरोत्सूरेविंधातुं दरम् । भृङ्गानङ्गिसुदुस्सहान् सममुचज्ज्वालान् विलोलांस्तथा नेत्रे शोणितलोहिते च विदधे शीर्षं च सेर्ष्यापरम् ॥ ३७ ॥ दृष्ट्वा चेष्टितमेतदीयमखिलं दध्यौ गुरुर्मानसे मुग्धा भापयते मुधा किमधुना मां बालवद्बालिशा । नालीभिः सरलाशया वनचराः क्षुभ्यन्ति ते पक्षिणो निस्साणध्वनिभिन्नकर्णकुहरा नो चैत्यपारापताः ॥ ३८ ॥ प्रीतिं यान्ति जने

परां सुमनसः सम्मानदानाद्ध्रुवं स्पष्टं दुष्टनरा हठेन शठतां मुञ्चन्ति नो शाम्यतः । पीयूषं भुजगः पिबन् बत विषं तीक्ष्णं त्यजेन्निर्भरं मन्त्रेणैष निपीडितः कमलवत्स्यात्कोमलः केवलम् ॥ ३९ ॥ सुरीं शिक्षायोग्यां स्वमनसि विदित्वोदितमति-र्विनेयेनानाय्य प्रवरमुशलोदूखलयुगम् । अखण्डान् पाखण्डानिव गुरुरुपाऽखण्डयदयं मदेनास्याः साकं गुरुरपदयं तन्दुल-गणान् ॥ ४० ॥ चित्रं तन्दुलसञ्चयेषु गुरुणा दत्ताः प्रहारास्तदा देवी खण्डितविग्रहा समभवत्सा सैन्धवा तत्क्षणम् । आकृष्टं मुशलं करेण निखिलाः सुर्यः समीयुः क्षणान् माहात्म्यं महतामचिन्त्यमहिमामन्त्रौषधीनामिव ॥ ४१ ॥ तुदसि सदयचेता दीननादं नदन्तीं किमिह युवतिमेतां मुञ्च कोपं मुनीश ! । इममसममपि त्वं मे सहस्वापराधं विदधति पितरौ नो जात्व-पत्ये प्रकोपम् ॥ ४२ ॥ इति सकलसुरीभिः सार्द्धमाभापयन्ती यतिपतिरवदत्तां सैन्धवां शान्तकोपः । विगतगदमिदं स्यान्मन्त्रिणश्चेच्छरीरं तदहमपि च मुञ्चे बन्धनाद्वोऽधुनैव ॥ ४३ ॥ सार्द्धं व्यन्तरसुन्दरीभिरगमन्मन्त्रीशगेहं रयात् सूरीशः पतितं ददर्श मृतवत्तं नष्टचेष्टं भृशम् । तद्वाक्याद्विदधुः सुधाभिरभितस्तास्तद्वपुर्नीरुजं धीराणां वचनेन भीतिकलिताः कुर्वन्ति किं नो जनाः ॥ ४४ ॥ रेजे राजपितामहः स निहते दोपाभ्रपूरे तदा दूरं तेन महाबलेन गुरुणा राजेव तेजो-वृतः । दैव्यश्चान्यखगप्रभा इव भृशं ता निष्प्रभा जज्ञिरे लब्ध्वा स्वोदयमादरेण कुमुदं विस्तारयामास सः ॥ ४५ ॥ नत्वा श्रीमुनिसुव्रतं व्रतिपतिः कृत्वाद्भुतं विक्रमं रात्रावेव स पत्तनं पुनरगादज्ञातवार्त्तः परैः । प्राता रोगगणातुरं स्वसचिवं संशो-चते निर्भरं वृत्तान्तं स जगाद भूमिपतये शिष्यो मनीष्यग्रणीः ॥ ४६ ॥ नित्यं पुण्यजनप्रवर्द्धनकरे दिव्यं दधाने वपुः स्वोजोंज्जासितशात्रवे सुरपतिर्यद्वज्जयन्ते मुदा । तस्मिन् पुत्रसमे स मन्त्रिणि नृपः स्वं राज्यभारं चिरं विन्यस्योत्तमधर्म-

कर्मनिरतः सौख्यं सिषेवे स्वयम् ॥ ४७ ॥ श्रीरत्नसिंहगुरुपादसरोरुहालिश्चारित्रसुन्दरकविर्यदिदं वितेने । तस्मिन् कुमार-
चरिते सचिवाधिकारी सर्गः समाप्तिमगमत्किल सप्तमोऽयम् ॥ ४८ ॥

॥ इति भट्टारक–श्रीरत्नसिंहसूरिशिष्योपाध्यायश्रीचारित्रसुन्दरगणिविरचिते श्रीकुमारपाल-
चरिते महाकाव्ये जयाङ्के सचिवाधिकारी सप्तमः सर्गः ॥ ग्रन्थाग्रम् १५९ ॥

---

## ॥ अथाष्टमः सर्गः ॥

अथ श्रीकुमरस्तन्वन् वरिवस्यां गुरोस्तदा । निनाय नयवान् कालं बहुलं लोकपालकः ॥ १ ॥ गुरुवाक्यामृतं तस्य पिबतो मेदिनीपतेः । न तृप्तिरभवच्चित्रं तृष्णा भृशमवर्द्धत ॥ २ ॥ गङ्गाम्बुविमलं चेतस्तस्य नागात्कदाचन । विहायार्हन्मतं स्फीतं क्षीरार्णवसमुज्वलम् ॥ ३ ॥ विना नमस्कृतिं वाणी शिरश्च गुरुवन्दनम् । मनो जिनं श्रवः शास्त्रं नाभजत्तस्य निर्वृतम् ॥ ४ ॥ द्विर्वारं स व्यधाद्धन्यः शश्वदावश्यकं नृपः । त्रिकालं जिनपूजां च चक्रे वक्रेतराशयः ॥ ५ ॥ सूरिस्तदर्थं विदधे स्फुटार्थान् श्रीयोगशास्त्रप्रमुखान् प्रबन्धान् । पपाठ निष्कुण्ठमतिर्नृपस्तान् पटुप्रभावानशठस्वभावः ॥ ६ ॥ सुखेन शुश्राव गुरोर्मुखेन त्रिषष्टिपुंसां चरितानि राजा । क्रमेण जज्ञेऽखिलविज्ञमुख्यः सत्सङ्गतिः किं न कृता करोति ॥ ७ ॥ अन्यदा वन्दितुं सूरीन् भूरिभावेन सोऽगमत् । युक्त्या परिच्छदोपेतो नत्वोपाविशदग्रतः ॥ ८ ॥ यावत्समयवार्त्ताभिस्तेन वार्त्तयति प्रभुः । तावदेको द्विजस्तत्राध्वनीनसदृगागमत् ॥ ९ ॥ विदित्वा विदुरं भावैरपृच्छत्तं महीपतिः ।

कुतः किमर्थमत्रागा विद्वन्नावेद्यतामिदम् ॥ १० ॥ इत्युक्तो भूभुजा युक्तिविज्ञस्तज्ज्ञो जगाद सः । कुर्वन् सभासदः सर्वान् विस्मयस्मेरचक्षुषः ॥ ११ ॥ श्रृणु सर्वजनाधार ! दुर्वारतमविक्रम !। शस्तस्मेरजने मेऽस्ति वासः काश्मीरमण्डले ॥ १२ ॥ एकदा शारदां देवीं देवदानवसेविताम् । उद्युक्तः परया भक्त्या तत्राराधितवानहम् ॥ १३ ॥ सा तुष्टा मे ददौ विद्यां हृद्यामाकाशगामिनीम् । यया जगति जज्ञे मे गमागमसमर्थता ॥ १४ ॥ एकदाहमगां स्वर्गं निसर्गोज्ज्वलमीक्षितुम् । तत्र चित्रभरं पश्यन्नाप देवेशसंसदम् ॥ १५ ॥ चञ्चच्चामरवीजितं धृतसितच्छत्रं पवित्रद्युतिं तत्रापश्यमदृश्यरूपमितरैर्लोकैर्हरिं भासुरम् । तत्सेवावसरागतान् हरिहरब्रह्मादिदेवानहं दृष्ट्वा प्रापमथात्मलोचनफलं लभ्यं शुभैः कर्म्मभिः ॥ १६ ॥ स्वर्लोकस्थितिमालोक्य तदा लोकोत्तरामहं । अन्वभूवं तमानन्दं यो हि वाचामगोचरः ॥ १७ ॥ सोमशर्म्मन्नयं लेखो देयः श्रीहेमसूरये । त्वया कुमारपालेन सहितायेत्युक्तिपूर्वकम् ॥ १८ ॥ पुनरागच्छते भूमीं भवदाज्ञापवित्रिताम् । शक्राज्ञया लिखित्वामुं मह्यं लेखमदाद्गुरुः ॥ १९ ॥ युग्मम् ॥ ततोऽहं वाचिकं लात्वाऽऽजग्मिवानत्र वेगतः । विलम्बः क्रियते कार्ये स्वाम्यादिष्टे न कर्हिचित् ॥ २० ॥ वार्तामत्यद्भुतां श्रुत्वाश्चर्यं भेजुः सभासदः । विद्वानवाचयल्लेखं लेखेशप्रहितं यथा ॥ २१ ॥ स्वस्ति श्रीमति पत्तने नृपगुरुं श्रीहेमचन्द्रं मुदा स्वःशक्रः प्रणिपत्य विज्ञपयति स्वामिंस्त्वया सत्कृतम् । चन्द्रस्याङ्कमृगे यमस्य महिषे यादःसु यादःपतेर्विष्णोर्मत्स्यवराहकच्छपकुले जीवाभयं तन्वता ॥ २२ ॥ श्रीमान् स्वर्गपतिः कुमारनृपतिं सस्नेहमाभाषते राजंस्त्वं विजयस्व विश्वजनताजीमूततुल्यः सदा । प्रीतास्त्वच्चरितामृतेन निखिला यस्मादिमे नाकिनो नो वाञ्छन्ति सुधामपीप्सितमिदं देयं त्वयैषामिति ॥ २३ ॥ उदारं नृपतिः पद्यद्वयं हृद्यं निपीय तत् । अहो !

बुद्धिरहो! व्याख्येत्यशंसत्तं मुहुर्मुहुः ॥ २४ ॥ दश लक्षाणि द्रम्माणां दश चोच्चैस्तुरङ्गमान्। श्रीमान् कुमारपालोऽदादिन्द्र-लेखप्रदायिने ॥ २५ ॥ अनुज्ञाप्य नृपं विज्ञः स जगाम निजास्पदम्। कीर्त्तिं स्फूर्तिमतीं तस्य तन्वानः क्षितिमण्डले ॥ २६ ॥ नृपेऽन्यदा स्थिते सूरिसभायां सपरिच्छदे। आगमत्सुमनाः कश्चिदन्तेवासिव्रजावृतः ॥ २७ ॥ पश्यन् स संसदं सर्वानित्याशीर्वादमादधे। पातु वो हेमगोपालः कम्बलं दण्डमुद्वहन् ॥ २८ ॥ चुकोप भूपतिर्यावत्प्रभूणां हीनवर्णनात्। बुबुधे तन्मनोभावं स बुधस्तावदिङ्गितैः ॥ २९ ॥ पुनर्नृपाननं पश्यन्नुत्तरार्द्धमुदाहरत्। षड्दर्शनपशुग्रामं चारयन् जैनगोचरे ॥ ३० ॥ अनुच्छिष्टेन सन्तुष्टस्तेन वाक्येन कोविदः। अदापयन्मुदा तस्मै द्रम्मलक्षद्वयं नृपः ॥ ३१ ॥ इति कोशाधिपो दानवहिकायामलीलिखत्। कविसार्थं विना कीर्त्तिः ख्यातिं नेयर्त्ति विष्टपे ॥ ३२ ॥ लक्ष्मीमिमां कति नराश्चपलामवाप्य संरक्षणाय बत भूमितले क्षिपन्ति। कारागृहे विनिहितं स्वमवेत्य तैः सा तेषां गृहाद्व्रजति नाशमहो! क्षणेन ॥ ३३ ॥ उत्पादिता स्वयमियं यदि तत्तनूजा तातेन वा यदि तदा भगिनी खलु श्रीः। यद्यन्यसङ्गमवती च तदा परस्त्री तत्त्यागबुद्धमनसः सुधियस्ततोऽमी ॥ ३४ ॥ कामं रूपेण रामं निजनयविधिना धर्म्मजं सत्यवाचा कर्णं दानेन बुद्ध्या धिषणमनघया विक्रमं विक्रमेण। एकोऽप्यन्यानेनेकानसुरसुरनरान् श्रीकुमारो विजिग्ये भानुर्भासः समस्ता न हरति किमिह प्रोद्गतोऽन्यग्रहाणाम् ॥ ३५ ॥ एवं दानगुणेन भूमिवलयं कुर्वन् स पूर्णं भृशं क्षेत्राक्षेत्रविवेचनं रचितवान् पर्जन्यवन्नो नृपः। शश्वन्मानवदेवदानवभुवैर्डिण्डीरपिण्डोज्ज्वलैर्विश्वं विश्वमपूरयन्निजयशःपूरैः कुमारस्तथा ॥ ३७ ॥

॥ इति श्रीकुमारपालचरितेऽष्टमसर्गे प्रथमो वर्गः ॥

अत्यन्तसेवनाद्धर्ममाद्यमर्थेषु निर्म्ममे। कदाचित्सेवनात्कामं स जघन्यपदे व्यधात् ॥ १ ॥ प्रापयत्परमां कोटिमर्थं सत्पात्रपोषणात् । महान्तमाश्रितः को न विश्वकोटीरतां भजेत् ॥ २ ॥ अर्थेन सोऽर्थिनां कामान् नृपः काममपूरयत् । धर्म्मकृत्यैर्निजं काममपूरिष्ट निरन्तरम् ॥ ३ ॥ सभायामन्यदा तस्थौ कुमारो मारसुन्दरः । चतुर्दिशां महीपालास्तत्सेवार्थं तदाऽऽययुः ॥ ४ ॥ दधार च्छत्रभृच्छत्रं तन्मूर्ध्नि विधुसंनिभम् । चालयांचक्रतुर्वारनार्यौ रुचिरचामरे ॥ ५ ॥ अहरत्सकलां शोभां स हरेर्धरिणीपतिः । जहार हारिणीं छायां सद्धर्म्मायाः सभामिमाम् ॥ ६ ॥ नृत्यं पणस्त्रियस्तेनुर्गानं च वरगायनाः । द्वन्द्वयुद्धं तदा मल्ला मागधा वंशवर्णनम् ॥ ७ ॥ कुर्वन् विचारं रुचिरं प्रमोदात् श्रीमान्कुमारो वरिवर्ति तत्र । शुश्राव तावच्छ्रुतिदुःखहेतुं वम्बारवं द्वारि निवारिताघः ॥ ८ ॥ श्रुतेन तेनाजनि भूमिनाथः किमेतदित्याकुलचित्तवृत्तिः । दृष्टे श्रुते वाथ न को नवीने भजेत्परामुत्कलिकामिलायाम् ॥ ९ ॥ तन्निशम्य सभालोकाः सर्वे क्षोभं प्रपेदिरे। आतङ्ककारणं नास्ति परं वम्बारवं विना ॥ १० ॥ अहो ! नवीनमेतन्मे किं राज्ये श्रूयतेऽधुना । अथवा दूमितः कश्चिद्रावां कर्तुमिदं व्यधात् ॥ ११ ॥ विमृशन्निति भूपालस्तदाकारणहेतवे । दिदेश स्वप्रतीहारं स्वर्णकम्बाधरं तदा ॥ १२ ॥ द्वास्थनिर्देश्यमानाध्वा तत्रैको द्विज आगमत् । आशीर्वादं नृपायासौ दत्त्वोपाविशदग्रतः ॥ १३ ॥ वम्बापातनहेतुं स पृष्टो नृपतिनाभ्यधात् । काश्यां दासीकृतारातेर्वसतिर्विद्यते मम ॥ १४ ॥ आगच्छन् गूर्जरां वीर ! वीक्षितुं क्षितिमण्डनम् । देशात्तव बहिर्यान्तीमद्राक्षं स्त्रियमेककाम् ॥ १५ ॥ वक्रानना वक्रपदा वक्रोष्ठी वक्रनासिका । काऽरण्ये कर्णहीनेयमिति चिन्तामहं दधौ॥ १६ ॥ कथं पिशाची किमु राक्षसीयं किं शाकिनी किल्त्रिषिकप्रिया किम् । विचिन्तयन्नित्थमहं मनोऽन्तस्तामभ्यधां श्राग् रुदतीं

निरीक्ष्य ॥ १७ ॥ का त्वं पातकपुत्रिकास्म्यकमला पौत्री तथाहं कलेः कस्माद्रोदिषि वान्धवस्य निधनात् को वान्धवोऽयं तव । दारिद्र्यं किमजायतास्य निहतः सोऽरं तमोवैरिणा श्रीमच्छ्रीकुमरेण कस्य शरणं तद्यासि तद्द्वेषिणाम् ॥ १८ ॥ एवमुक्त्वागमत्सा स्त्री राजंस्ते यत्र शत्रवः । महता परिभूतानां तद्द्विषः शरणं यतः ॥ १९ ॥ अप्राप्नुवन् प्रवेशं ते द्वारि राजशतावृते । त्वद्दर्शनोत्सुकः सोऽहं बम्बामेताममपातयम् ॥ २० ॥ वचनेनामुना तस्य तुतोष क्षितिवासवः । कः सूक्तसुधर्या सिक्तो व्यनक्ति न मुदङ्कुरम् ॥ २१ ॥ पञ्च लक्षाणि द्रम्माणां दश चोच्चैस्तुरङ्गमान् । विश्वेश्वराय कवये तुष्टः श्रीकुमरो ददौ ॥ २२ ॥ सार्द्धं नृपतिना सोऽथ विश्वेश्वरकविर्ययौ । श्रीहेमसूरिशालायां विद्वद्गोष्ठीरसेरितः ॥ २३ ॥ आलोक्य संसदं सूरेर्भूरिसूरिजनावृताम् । स ब्रह्मपरिषत्तुल्यामेनां मेने कवीश्वरः ॥ २४ ॥ सूरिशिष्यपरिक्षायै द्वे समस्ये समर्प्पयत् । व्याषिद्धेति प्रसिद्धाद्या श्रृङ्गाग्रेणेति चापरा ॥ २५ ॥ तामाद्यां निरवद्यपद्यरचनाहृद्यः कपर्दीमहामात्यः पूर्वमपूरयद्दुरुतरप्रज्ञाप्रकर्षोद्धरः । कुर्वंस्तन्मनसीति विस्मयभरं श्रीसूरिशिष्यः क्षणादन्यां मान्यतमोऽनिशं मतिमतां श्रीरामचन्द्रोऽभ्यधात् ॥ २६ ॥ नैतस्याः प्रसृतिद्वयेन सरले शक्ये पिधातुं दृशौ सर्वत्रापि च लक्ष्यते मुखशशिज्योत्स्नावितानैरियम् । इत्थं मध्यगता सखीभिरभितो दृग्मीलनात्केलिषु व्याषिद्धा नयने मुखं च रुदती स्वे गर्हते कन्यका ॥ २७ ॥ त्वं नो गोत्रगुरुस्तवेन्दुरधिपस्तस्यामृतं तत्करे तेन व्याधशरातुरां मम प्रियामेनां समुज्जीवय । इत्युक्ते मृगलाञ्छनस्य हरिणे कारुण्यमाजल्पतः श्रृङ्गाग्रेण मृगस्य पश्य पतितं नेत्राम्बु भूमण्डले ॥ २८ ॥ स जहर्ष निजार्थेन ते निपीयाशु पूरिते । अहो! जानाति विश्वेऽस्मिन् कविरेव कवेः श्रमम् ॥ २९ ॥ शिष्या यस्येदृशाः सोऽत्र गुरुः केनोपमीयते । अब्धिना कः समस्तेन

यद्वेला अपि दुस्तराः ॥३०॥ एवं विचिन्तयन् गोष्ठीं सूरिभिः सह सोऽकरोत् । नहि सूक्तसुधास्वादसममस्त्यपरं भुवि ॥३२॥ स्वप्रज्ञया स्पर्द्धमानावन्योन्यं सूरिसंसदम् । अन्यदा चारणौ कौचिच्चतुरावीयतुः परम् ॥ ३२ ॥ सभ्यान् भूपादिकान् वीक्ष्य कोविदान् श्रीपतीनपि । अवोचच्चारणो वाक्यं तत्रैकः समयोचितम् ॥ ३३ ॥ लच्छिवाणिमुहकाणिए पइभागीमुहमरुं । हेमसूरि अच्छाणि जे ईसर ते पण्डिया ॥ ३४ ॥ हृष्टो नरपतिस्तस्मै द्रम्मायुतमदापयत् । तुष्टानामथ रुष्टानामचिन्त्यं चरितं सताम् ॥ ३५ ॥ नृपाय वन्दमानाय पञ्चाङ्गस्पृष्टभूमये । गुरुणा स्वकरे पृष्ठे दत्तेऽवादीदिदं परः ॥ ३६ ॥ हेम तूं हालाकरमरउं जे इह उच्चब्भूयसिद्धि । जे चंपइ हिठ्ठा मुहा ते ऊपरीरिद्धि ॥ ३७ ॥ स प्रस्तावोपपन्नेन वचसा तेन तोषितः । भूयोऽप्यपाठयद्भूपः समये किं न संमतम् ॥ ३८ ॥ चारणेनोचिते पद्ये वारत्रयमुदीरिते । दक्षमुख्यः कुमारोऽदाद् द्रम्मलक्षत्रयं तदा ॥ ३९ ॥ इति विबुधविनोदैर्नन्दयन्मानसं स्वं प्रवरवितरणेनाह्लादयन् कोविदौघम् । सुरपतिरिव भुञ्जन् भूरिभोगाननैषीत् क्षणमिव बहुकालं श्रीकुमारो नृपालः ॥ ४० ॥ आदत्यादत्य सर्वांस्त्यजति जगति या पण्यनारीव पुंसो यस्या मोहेन देही गणयति च गुणान्नो विवेकादिकांस्तान् । स्वासक्तानामजस्रं जनयति सुधियामप्यहो ! या कुबुद्धिं तामासाद्य श्रियं को जललवचपलां मुह्यति ज्ञाततत्त्वः ॥ ४१ ॥ एवं स व्यसनापहो नरपतिर्मत्वा प्रतिज्ञापरः श्रीत्यागं विदधेऽधिभूमिजनतां तेनानृणां चाकरोत् । मानुष्ये चपलाचले सति धने सन्ध्याभ्ररागोपमे प्राज्ञः कोऽत्र परोपकारकरणाद्गृह्णाति नो तत्फलम् ॥ ४२ ॥ त्यागः पाणितले दया च हृदयं श्रीमज्जिनाज्ञाशिरः सच्छास्त्रं श्रवणद्वयं गुरुनतिर्भालं मुखं

सद्वचः । तस्याभूषयदस्तदूषणगणः सोऽलञ्चकाराखिलं विश्वं च स्वयशोभिराशु नृपतिर्भानुः प्रभाभिर्यथा ॥ ४३ ॥

॥ इति श्रीकुमारपालचरितेऽष्टमसर्गे द्वितीयो वर्गः ॥

श्रीमान् कुमारपालोऽथ जिनाज्ञापालकः सदा । सिद्धान्तामृतसंतृप्तस्वान्तश्चिन्तिवानिति ॥ १ ॥ अहो ! यद्दीयते दानं सनिदानमिहार्थिनाम् । वदत्यल्पफलं तज्ज्ञास्तत् कुक्षेत्रोप्तबीजवत् ॥ २ ॥ त्यक्तसावद्यकृत्यानां सुकृतोद्यतचेतसाम् । वितीर्यते यतीनां यत्तदल्पं न फलप्रदम् ॥ ३ ॥ राजप्रतिग्रहं जैना गृह्णन्ति यतयो नहि । नास्ति तेभ्यः परं पात्रं तारणोत्तरणक्षमम् ॥ ४ ॥ गृह्णन्ति ये न ते मह्यं रोचन्ते चरणोज्झिताः । रोचन्ते ये तु ते नैतद् गृह्णन्ति विगतस्पृहाः ॥ ५ ॥ धन्यास्ते कृतपुण्यास्ते पुमांसः श्लाघ्यसम्पदः । कुर्वन्ति यतिदानेन ये कृतार्थं निजं धनम् ॥ ६ ॥ वणिजस्ते वरं मत्तः प्राप्तराज्यान्महीतले । येषां वित्तं समायाति यतिकार्ये निरन्तरम् ॥ ७ ॥ यतिदानविहीनेनानेन राज्येन किं मम । शाल्मलीकुसुमेनेव विगन्धेन महीयसा ॥ ८ ॥ स शोचयन् स्वं यतिदानहीनमहीनभावो नृपतिस्तदर्थम् । गुरून् ययाचे रचिताञ्जलिः सन् श्रीसङ्घसाक्षं विनयावनम्रः ॥ ९ ॥ तमूचिरे ते चरणैकचित्ताः समग्रसिद्धान्तविचारचित्ताः । प्रतिग्रहो भूमिपतेर्यतीनां राजन्निषिद्धोऽस्ति जिनेश्वरेण ॥ १० ॥ कथं जिनाज्ञां त्रिदशेशमान्यां विराधयन्तीह मुमुक्षवोऽमी । या मानिता यच्छति मुक्तिसौख्यं विमानिता संसृतिवासमुच्चैः ॥ ११ ॥ विहाय वाञ्छां तदिमां महीश ! विधेहि जैनाननृणांस्त्वमुर्व्याम् । अवादि सुश्रावकनामधेयं पात्रं यतेरन्यदहो! जिनेन ॥ १२ ॥ साधुरुत्तमपात्रं स्यान्मध्यमं श्रावको भवेत् । अविरतसम्यग्-

दृष्टिर्जघन्यं पात्रमुच्यते ॥ १३ ॥ ततो नरपते ! जैनान् दानेनानृणतां नय । चक्रे श्रीभरतश्चक्री श्राद्धभुक्तिं पुरा पराम् ॥ १४ ॥ नृपतिर्गुरुवाक्येन तेनासौ मुमुदे भृशम् । तदर्थमवृथारम्भस्तत्कालमुपचक्रमे ॥ १५ ॥ कोटीश्वरं नृकोटीरः स तदा कोविदोत्तमम् । व्यधादाभडनामानं श्राद्धोद्धाराधिकारिणम् ॥ १६ ॥ प्रतिद्रङ्गं प्रतिग्रामं प्रतिमार्गं गृहं प्रति । डिण्डिमं वादयामास सादिताशेषकिल्बिषम् ॥ १७ ॥ भजध्वं भो जनाः ! पापनाशनं जिनशासनम् । त्यजतापारसंसारकरं मिथ्यामताग्रहम् ॥ १८ ॥ विहाय कुमतं योऽत्र जनो जैनो भविष्यति । तस्मै कुमारभूपालो दानं दास्यति वाञ्छितम् ॥ १९ ॥ जिनाज्ञापालकाः सर्वे समागच्छत सत्वरम् । करिष्यत्यनृणान् यत्तान् नृपो मुक्तकरानपि ॥ २० ॥ इतिपटहनिनादाकारिता वारिताघं जिनमतमितपापा भेजिरे भूरिलोकाः । कुमरनृपतिदेशादाभडोऽनल्पदानैर्मुदितहृदयवृत्तिस्तान्वितेने गतर्णान् ॥ २१ ॥ अजनिपत जिनाज्ञापालकाः सर्वलोकाः कुमतततिरियाय क्वापि नाशं न जाने । उदितवति सुचण्डे मण्डले चण्डधाम्नः क्वचिदपि कुहुरस्थां वेत्ति कः कौशिकालीम् ॥ २२ ॥ पूर्वे वर्षे कुमरनृपतिर्द्रम्मकोटीश्चतस्रः श्राद्धोद्धारे सुकृतरसिकोऽसौ व्यये स्वाश्चकार । एवं यच्छन् सततमकरोदद्वितीयं पृथिव्यां स्वं राज्यं श्रीजिनपतिमतं च प्रणष्टारिवारम् ॥ २३ ॥ सेवां चक्रुः परिहृतमदा वाडवा हेमसूरेर्हित्वा हिंसाकरमतितरां वेदमार्गं समग्राः । पापः पापे नयवति नयी स्याज्जनो राज्ञि सर्वो वार्ता सत्येयमजनि तदा जैनधर्म्मेण विष्वग् ॥ २४ ॥ अस्मिन्नवसरे सर्वे मिलित्वा व्यवहारिणः । व्यजिज्ञपन्नृपं क्लृप्ताञ्जलयः सदसि स्थितम् ॥ २५ ॥ अत्रेभ्या निःसुताः प्रापुः साम्प्रतं पञ्च पञ्चताम् । द्वासप्ततिलक्षमानं तद्धनं विद्यते प्रभो ! ॥ २६ ॥ तदादिश विशांनाथ ! यथा नीत्वाखिलं क्षणात् । क्षिपन्ति सचिवाः कोशे

स्थितिरेषाऽस्ति भूभुजाम् ॥ २७ ॥ इत्युक्त्वाऽदर्शयन् राज्ञे ते तत्संख्यापटं स्फुटम् । नीत्वा तं भूपतिश्चित्ते दध्यौ सन्तोषशालिने ॥ २८ ॥ अहो ! मे विद्यते वित्तं पुरा भाग्यार्जितं बहु । ततः किं मृतद्रव्येणानेनैनःकारिणा भृशम् ॥२९॥ ध्यायन्निति कराभ्यां तं नृपः पट्टमपाटयत् । तदीयगोत्रवर्गिभ्यो दीयतामिति चादिशत् ॥ ३० ॥ तस्य निर्लोभतां वीक्ष्य तदा श्रीहेमसूरयः । प्रशंसापूर्वमित्यूचू रोमाञ्चाञ्चितमूर्त्तयः ॥ ३१ ॥ यस्याज्ञां मन्वते विश्वे सुरासुरनरेश्वराः । लोभमेतं जयन् राजन् ! सत्यं विश्वेश्वरो भवान् ॥ ३२ ॥ अपुत्राणां धनं गृह्णन् पुत्रो भवति पार्थिवः । त्वं तु सन्तोषतो मुञ्चन् सत्यं राजपितामहः ॥ ३३ ॥ अथ श्रीसिद्धराजासद्द्वादशग्रामनायकः । वामराशिर्द्विजस्तत्र वर्त्तते भूतिकप्रभुः ॥ ३४ ॥ विद्वान् स्वविद्यया विश्वं तृणवन्मन्यतेऽखिलम् । स्पर्द्धते प्रत्यहं सूरीन् स दूरीकृतसन्मतिः ॥ ३५ ॥ अन्यदा व्रजतः सूरीन् दृष्ट्वा दुष्टाशयो भृशम् । भक्तोद्गारं सृजन्नुच्चैरुवाचेति स्वसेवकान् ॥ ३६ ॥ यूकालिक्षशतावलीवलवलच्चोलश्चलत्कम्बलो दन्तानां मलमण्डलीपरिचयाद्दुर्गन्धरुद्धाननः । नाशावंशविरोधनाद्गिणगिणत्पाठप्रतिष्ठाविधिः सोऽयं हेमडसेवडः पिलपिलत्खल्लिः समागच्छति ॥ ३७ ॥ वाक्यं तत्परुषाक्षरं मुनिपतिः श्रुत्वा न कोपं दधौ किञ्चित्तं स्मितधौतदन्तवसनः प्रोचे क्षमावानिति । किं पद्ये प्रथमं विशेषणमिहाधीतं न धीवारिधे ! सोऽयं सेवडहेमडेति विदुषा वाच्यं त्वयातः परम् ॥ ३८ ॥ सावद्यं निजपद्यमुज्झितमदो मत्वा गुरोर्वाक्यतो लज्जानम्रमुखो जगाम सहसा पश्यन् दिशोऽसौ जटी । निन्दां तेन कृतामवेत्य नृपतिः श्रीसूरिभक्त्या स्वयं तद्वृत्तिं सकलामलोपयदथो सद्दर्शनाराधकः ॥ ३९ ॥ भ्रष्टः स स्वपदाद्गृहीतसकलद्रव्यो नृपेण च्छलात्क्षुत्क्षामो विदधाति तत्र नगरे भिक्षाटनं रङ्कवत् । विश्वोद्द्योतकरं तमोभरहरं सूर्यं द्विषन्निर्भरं तस्मा-

भिर्निहितप्रभो भवति नो किं कौशिकस्तत्क्षणम् ॥ ४० ॥ दुष्प्रापां परिभाव्य वृत्तिमपरोपायैर्निजामातुरो मुक्त्वा मानभरं चकार सुचिरं श्रीसूरिसेवामयम् । शालायां सकलान् निरीक्ष्य पठतः श्रीयोगशास्त्रं जनान् प्रोवाचोच्चरवेण सोऽन्यदिवसे भूमीपतेः शृण्वतः ॥ ४१ ॥ आतङ्ककारणमकारणदारुणानां वक्रेण गालिगरलं निरगालि येषाम् । तेषां जटाधरफटाधरमण्डलानां श्रीयोगशास्त्ररचनामृतमुज्जिहीते ॥ ४२ ॥ नादात्तथापि नृपतिर्दृढगूढरोषो ग्रासं तदीयमुदयो गुरुनिन्दके सः । आवश्यकादिकविधिं समधीत्य तस्थौ तत्रैव स द्विजवरो गुरुसेवनाय ॥ ४३ ॥ षोढावश्यकतत्परः प्रतिदिनं कुर्वन् गुरूपासनां चक्रे निर्विकृतिर्व्रतं स चतुरो मासान् दधानः शमम् । तस्यासीत्तपसा वपुः कृशतरं घोरेण तेनाधिकं पूर्णेऽथो नियमे निजे यतिपतिं सोऽवोचदेवं मुदा ॥ ४४ ॥ चतुर्म्मासीमासीत्तव पदयुगं नाथ ! निकषा कषायप्रध्वंसाद्विकृतिपरिहारव्रतमिदम् । इदानीमभ्यूद्यन्निजचरणनिर्लोठितकले ! जलक्लिन्नैरन्नैर्मुनितिलक ! वृत्तिर्भवतु नः ॥ ४५ ॥ घोराभिग्रहधारिणं कृतशिरःक्षौरं क्षमाशालिनं दृष्ट्वा तं न विदाञ्चकार नृपतिः प्राक्तान्यजन्मोपमम् । सूरिस्तच्चरितं चमत्कृतिकरं तस्मै समस्तं जगौ तद्वृत्तिं द्विगुणामदापयदयं धर्म्मैकचित्तो मुदा ॥ ४६ ॥ वृत्तिं स्वामधिकामवाप्य मुमुदे धर्म्मप्रभावात्तदा चक्रेऽवक्रमनाः सदा मुनिपतेः सेवां जिनाज्ञापरः । प्रत्यक्षं बहुपापपुण्यजनितं स प्राप विप्रः फलं तस्मिन्नेव कलौ भवे निजकृतं कर्म्माथवा भुज्यते ॥४७॥ एवं सर्वजनांश्चकार कुमरो जैनान्महीमण्डले मेने वैरिसमानमानमहिमाऽसौ साधुनिन्दाकरान् । सर्वान् बन्धुसमानमानयदयं नित्यं जिनाज्ञापरान् सम्यक्त्वं दृढतामलम्भयदलं प्रोन्मूल्य मिथ्यामतम् ॥ ४८ ॥ दृष्ट्वा तं बहुदायिनं स्वहृदये धातेति चिन्तां व्यधाद् व्यर्थामर्थिदरिद्रदां मम लिपिं चक्रे किलायं नृपः । विष्वग्

जैनमतं वितत्य तद्विषं पूर्णं विधास्यत्यरं शून्यान्मे निरयान् करिष्यति कृतं पापं निवार्य क्षितौ ॥ ४९ ॥ जलनिधिजलबिन्दून् यो मिमीते समग्रान् गणयति गगनस्थांस्तारकान् योऽखिलान्वा । अथ रचयति संख्यां प्राणिनां यः समेषां कुमरवितरणानां वेत्ति मानं स एव ॥ ५० ॥ एवं श्रीकुमरो ददत्प्रतिदिनं दानं निदानोज्झितं शीलं चन्द्रकलोज्ज्वलं च कलयंस्तन्वन्विचित्रं तपः । सद्भावं भवनाशनं स्वहृदयेऽसौ भावयन्नन्वहं दुर्जेयं कलिकालमल्लमजयत् क्षोणितलक्षोभिणम् ॥ ५१ ॥ श्रीरत्नसिंहगुरुपादसरोरुहालिश्चारित्रसुन्दरकविर्यदिदं चकार । तस्मिन् कुमारचरिते वरदानसंज्ञः सर्गः समाप्तिमगमत्किल सप्तमाग्र्यः ॥ ५२ ॥

इति भट्टारकश्रीरत्नसिंहसूरिशिष्योपाध्यायश्रीचारित्रसुन्दरगणिविरचिते श्रीकुमारपालचरिते
महाकाव्ये दानाधिकारोऽष्टमः सर्गः ॥ ग्रन्थाग्रं १५८ ॥

---

॥ अथ नवमः सर्गः ॥

अथो स सन्देहतमोहरं तं मेने गुरुं सर्वविदं नरेशः । प्रत्यक्षदृष्टे हि महत्प्रभावे स्यात्प्रत्ययः कस्य न दृश्यरूपे ॥ १ ॥ तमन्यदापृच्छदतुच्छभक्त्या नत्वा नरेशः शमनीरराशिम् । पूर्वे भवे किं भगवन्नकार्षं कर्म्मेह येनाहमभूवमीदृग् ॥ २ ॥ तमाह माहात्म्यनिधिर्मुनीन्द्रो मनाग् विहस्येति मृषानभिज्ञः । विना जिनं कोऽपि न वेत्ति पूर्वभवस्वरूपं किल भूप ! विश्वे ॥ ३ ॥ भवस्वरूपं किल पुद्गलानां विवर्त्तनं कर्म्मगतिं च सम्यक् । हित्वा जिनेन्द्रं श्रुतधारिणं वा परो न जानाति

नरो धरायाम् ॥ ४ ॥ यस्मिन्विचारे श्रुतधारिणोऽपि शक्ता न के तत्र वयं नरेश ! । नेतुं तमो यत्तनुतां न नेता सूर्यः कथं तद्धरति स्फुलिङ्गः ॥ ५ ॥ तस्मादमुष्माद्विरमस्व राजंस्त्वमाग्रहात्कालविचारविज्ञः । उपक्रमं यद्रचयन्ति विश्वे साध्येषु कृत्येष्वसकृत्कृतज्ञाः ॥ ६ ॥ एवं निषिद्धोऽपि नृपः प्रकामं भूयोऽर्थयामास गुरूंस्तदर्थे । करोति विद्वानपि नो निजार्थपरः कदाचित्सदसद्विचारम् ॥ ७ ॥ मत्वाग्रहं तस्य दृढं मुनीशः किं कार्यमत्रेति विचारयन् सः । पद्मावतीं छद्मविहीनचित्तः सस्मार देवीं दितभक्तदुःखाम् ॥ ८ ॥ आविर्भूय जगाद सा भगवती कृत्येन केनाधुना नीतास्मि स्मृतिगोचरं द्रुततरं ध्यानाधिरूढं गुरुम् । का चिन्ता तव शासनोन्नतिकृतः सच्चक्रचूडामणे ! यच्छादेशमिमं नियोजय जनं कार्ये निजे सत्वरम् ॥ ९ ॥ प्रष्टुं पूर्वभवानगाद्भगवती श्रीसूरिवाक्येन सा पूर्वस्मिन्नथ वैरिवारदलनी क्षेत्रे विदेहाभिधे । तस्मिन्नाद्य-मनादिसंसृतिहरं श्रीविद्यमानार्हतां श्रीसीमन्धरनामधेयमनमद्भव्यावलीसेवितम् ॥ १० ॥ सद्देशनासद्मनि संस्थितासु कोटीषु देवासुरमानवानां । संसारसन्तापहरं दिदेश धर्मं चतुर्द्धा भगवांस्तदानीम् ॥ ११ ॥ सा देशनान्तेऽवसरं निरीक्ष्य व्यजिज्ञपत्सूरिनातिं जिनाय । स्वामी स्वयं तं चरणैकनिष्ठं प्रशंसयामास समं नृपेण ॥ १२ ॥ अत्रान्तरे पूर्वभवान्नृपस्य पप्रच्छ देवी जगदेकनाथम् । ज्ञानेन विज्ञातसमस्तभावो जगद्गुरुस्तानवदद्दयावान् ॥ १३ ॥ जिनो यथा भूपभवान् दिदेश दधार तान् सा हृदये तथैव । रूपं पुरस्थं मुकुरे किमत्र महोज्ज्वले भाति न तादृगेव ॥ १४ ॥ ततोऽतिभक्त्या प्रणिपत्य देवी देवाधिदेवं पुनराजगाम । यच्चिन्तनात्स्यादिह सर्वसिद्धिः स्वयं विलम्बः किमु जायतेऽस्याः ॥ १५ ॥ आख्याय वृत्तं सकलं गुरुभ्यो जिनोपदिष्टं तदनिष्टहन्त्री । अन्तर्दधे दीधितिभिः प्रदीप्ता दिशः सृजन्ती सहसा सुरी सा ॥ १६ ॥ अथ

प्रभाते नृपतिः प्रणन्तुं प्रभून् विमायः स इयाय भूयः । प्रणम्य तानिन्द्रगुरूपमेयानुपाविशच्छक्रसमः पुरस्तात् ॥ १७ ॥
स्थितेषु सर्वेषु जनेषु तत्र प्रश्नं वितेने स पुनस्तमेव । प्रारब्धसिद्धिं यदनाप्य विश्वे सन्तो भजन्ते न समाधिमुच्चैः ॥ १८ ॥
अथोऽवदत्सूरिवरो निरीक्ष्य भूपादिसभ्यान् सकलान् स तत्र । काले गतज्ञानकलोऽत्र कश्चिज्जानाति नो पूर्वभवस्वरूपम् ॥ १९ ॥ दिदेश देवीवचनेन यद्वत्सीमन्धरो मां जगदेकबन्धुः । निजान् भवान् मद्वचनेन सम्यक् तथा त्वमाकर्णय वर्णनीय! ॥ २० ॥ अस्ति स्वस्तिविराजितं जयपुरं नाम्ना पुरं सुन्दरं श्रीमन्मालवमेदपाटविषयान्तर्वर्त्ति भूविश्रुतम् । कोटीशालयकोटिषु स्फुटतरा यस्मिन् पताका भृशं वीक्ष्यन्ते पवनाहता इव दिवं सन्तर्जयन्त्यः सदा ॥ २१ ॥ आरातिद्विपकेसरी नयवरः सल्लोकरक्षाकरस्तत्रासीज्जयकेसरी नरपतिर्निःसीमशौर्योद्धुरः । अद्याप्येष रविः पलायनपरः स्थेमानमालम्बते नो कस्यामपि यत्प्रतापविजितो बिभ्यन्निवोच्चैर्दिशि ॥ २२ ॥ क्रमेण जज्ञे जयताभिधानस्तस्यात्मजो विक्रमिणां प्रधानः । स यौवनो नीचजनप्रसङ्गाद्बभूव दुष्कर्मरतो नितान्तम् ॥ २३ ॥ जहार वित्तं धनिनां बलेन दारान्परेषामगमच्छलेन । विनाऽपराधं निधनं निनाय स साधुलोकान् धुतसाधुसङ्गः ॥ २४ ॥ रुष्टस्ततस्तं नृपतिः स्वदेशाद्व्यवासयन्नाशितसाधुलोकम् । अहो ! सहन्ते नहि नीतिहीनं स्वपुत्रमप्यत्र महच्चरित्राः ॥ २५ ॥ निर्गत्य देशात्स बहिर्बभूव पल्लीपतिः कर्बुटकुन्निवासः । स्यात्कौशिकानामिव तस्कराणां वासो गुहायामिव शूरभीत्या ॥ २६ ॥ मश्नाति मार्गे व्रजतो जनौघान् गृह्णाति वित्तं सकलं तदीयम् । न शक्यते पर्वतमध्यवासी नृपेण केनापि स निग्रहीतुम् ॥ २७ ॥ पुलिन्दवृन्देन निषेव्यमाणो भृशं स चौरीं विदधाति विष्वक् । अहो ! कपिर्वृश्चिकविद्धमूर्त्तिः करोति कां कां चपलो न चेष्टाम् ॥ २८ ॥

सार्थोऽथ सार्थाधिपतेः समागात्तत्रार्थपूर्णो नरवीरनाम्नः । अमोपयत्तं प्रखरोऽतिलोभात् स नाहलव्यूहबलच्छलेन ॥ २९ ॥ दृष्ट्वा पुलिन्द्रान् बहुलान्प्रणश्य सार्थेश्वरोऽनर्थकरानगात्सः । जीवन् समाप्नोति पुनर्यदर्थं प्राणांस्तदर्थे त्यजतीह कोऽज्ञः ॥ ३० ॥ सार्थं मुषित्वाशु स भिल्लनाथः पल्लीमगात्स्वामतिलाभहृष्टः । रावां विधातुं नरवीरनामागमत्क्रमान्मालवनाथमार्तः ॥ ३१ ॥ निवेद्य वृत्तं सकलं नृपायावदत्स दर्पादतिदीर्घरोषः । नरेश ! मे देहि बलं यथारिं निहत्य तं स्वं धनमानयामि ॥ ३२ ॥ तस्मै भूरिबलं ददौ नरपतिस्तन्निग्रहार्थं तदा सार्थेशः समवेष्टयल्लघुतरं पल्लीं प्रसुप्तां सतीम् । निर्नाथं विष्वग् वीक्ष्य बलं स नाहलपतिर्नंष्ट्वाऽचटच्चौरवदेकाकी शिखरं गिरेः परिकरं तत्रैव मुक्त्वाऽखिलम् ॥ ३३ ॥ समलुण्टयद् दृढहठात्तत्कर्बुटं दुष्टधीर्नापत्तं स विलोकयन्नपि रिपुं सार्थाधिपो मत्सरी । गच्छन्तीं गुरुगर्भमन्थरगतिं भार्यां तदीयां दयाहीनो दीनमुखामखण्डितमदो धृत्वाऽऽनयन्निर्नयः ॥ ३४ ॥ विदार्य तस्या उदरं स वैरादास्फालयद्बालमलं शिलायाम् । कुर्वन्त्यकृत्यानि महान्ति हन्त क्रोधान्धचित्ताः पुरुषाः क्षणेन ॥ ३५ ॥ सर्वस्वमादाय रिपोः स पल्लीमज्वालयत्तां ज्वलनोग्रमूर्त्तिः । व्याघुट्य वेगादगमत्समीपं क्रमेण राज्ञः कृतकृत्यमानी ॥ ३६ ॥ मदोद्धतः स्वं चरितं सदोन्तर्न्यवेदयद्भूमिभुजे स्वयं सः । तदारुणं स्त्रीशिशुमारणादि निशम्य भूपः सहसा चकम्पे ॥ ३७ ॥ करोति दुष्कर्म जनङ्गमोऽपि न हीदृशं किं पुनरन्यजातिः । सभासदः कम्पितसर्वगात्रा धिगित्यवोचंश्चिरनिन्दयन्तः ॥ ३८ ॥ तत्कर्म्म निन्दन्नृपतिर्गृहीत्वा तद्देहसारं नयविद्रवेण । कृत्वापमानं परमं दिदेश देशान्तरं तस्य विदश्यमूर्तेः ॥ ३९ ॥ दुष्कर्मणा तेन स निन्द्यमानः सर्वत्र हीनस्तृणवद्बभूव । अत्युग्रयोः स्यात्फलमत्र लोके पुण्यैनसोरित्यजनिष्ट सत्यम् ॥ ४० ॥ स दुःखसंवेगवशात्प्रयागे

गत्वा ततस्तापसतां बभार । प्रायो जनो ध्वस्तनिजाधिकारो निर्वेदमासादयति प्रभूतम् ॥ ४१ ॥ तत्रेशपूजानिरतश्चकार तीव्राणि कृच्छ्राणि निरन्तरं सः । अनूनभावः स्वतनुं तपोभिरशोषयद्दोषविमोक्षणाय ॥ ४२ ॥ तन्वन्विशुद्धं शिवधर्ममेवं क्रमादभूद्भूतिकचक्रमुख्यः । सदा सदाचारपरः प्रयाति यतिः प्रतिष्ठां महतीं जनेषु ॥ ४३ ॥ कालेन मृत्वा स विशुद्धभावाच्छ्रीसिद्धराजोऽजनि पत्तनेऽत्र । विना निदानं विहितैस्तपोभिः किं नाप्यते तीव्रतरैरमुत्र ॥ ४४ ॥ नीत्वा सर्वधनं विधाय बहुधा भूपोऽपमानं पुरा सार्थेशं निजनीवृतेरितनयं निष्कासयामास यत् । तस्मान्मालवमण्डलं दृढहठात्सिद्धाधिपोऽपीडयल्लोकानस्तदयोऽतुदत्कृतपुरानिन्दान् स्वशत्रूनिव ॥४५॥ यत्कोपेन जघान मानसहितो बालं पुरा जन्मनि तेनायं जयसिंहदेवनृपतिर्जज्ञेऽत्र पुत्रोज्झितः । भुङ्क्ते कर्म्म शुभाशुभं निजकृतं सर्वं भवेऽस्मिन् भवी नाभुक्तं विलयं प्रयाति विषमा कर्म्मस्थितिर्वर्त्तते ॥ ४६ ॥ नीचैर्गोत्रावतारश्चरमजिनपतेर्मल्लिनाथेऽबलात्वमान्ध्यं श्रीब्रह्मदत्ते भरतनृपजयः सर्वनाशश्च कृष्णे । निर्वाणं नारदेऽपि प्रशमपरिणतिः स्याच्चिलातीसुतेऽपि त्रैलोक्याश्चर्यहेतुर्जयति विजयिनी कर्म्मनिर्म्माणशक्तिः ॥४७॥ एवं संसृतिनाटकेऽत्र नटवत्प्राणी चिरं चेष्टते कुर्वन् भूरितराणि कर्म्मवशगो रूपाणि मायामयः । योनिं मुञ्चति याति वा न कतमां संवेदयन् वेदनां यावत्सर्वतमोपहं न लभते सम्यक्त्वरत्नं पदम् ॥ ४९ ॥

॥ इति श्रीकुमारपालचरिते नवमसर्गे प्रथमो वर्गः ॥

अथो गतर्द्धिर्जयताभिधानो जज्ञे तदा ध्वस्तसमस्तमानः । पराभवं प्राप्य परं रिपुभ्यः को दीनतां हीनधनो न याति

॥ १ ॥ एकोऽपि चौरीं विदधाति विष्वग् वित्तं हरत्यध्वनि दुर्बलानाम् । तनोति नित्यं मृगयां वनान्तर्बुभुक्षितः किं न करोति पापम् ॥ २ ॥ श्रीमद्यशोभद्र इति प्रसिद्धास्तत्रान्यदा सूरिवराः समीयुः । तान्वीक्ष्य तूणीरकरः स चासौ जिघृक्षयाऽधावदभावितान्यः ॥ ३ ॥ कुर्वन्नधिज्यं स धनुः पुरस्ताद्धात्वा यतीनेवमवोचदुच्चैः । विमुञ्चत द्राग् वसनानि सर्वे नो चेद्धनिष्यामि मुमुक्षवो वः ॥ ४ ॥ तमुग्रमग्रस्थितमाकलय्य जगाद सूरिर्मृदुनादमेवम् । भुञ्जन्नसि प्राग्भवदुष्कृतानि किं तानि भूयोऽपि करोपि भद्र ! ॥ ५ ॥ करोति तत्कर्म मदेन देही हसन् स्वधर्मं सहसा विहाय । रुदंश्चिरं रौरवरन्ध्रमध्ये भुङ्क्ते फलं यस्य किमप्यवाच्यम् ॥ ६ ॥ एकः समायाति भवेऽत्र जीवो भवान्तरं याति स एक एव । एकः फलं कर्म्मभवं च भुङ्क्ते शुभाशुभं पूर्वकृतं कृतं सः ॥ ७ ॥ हित्वा परस्त्रीगमनं परार्थादानं परप्राणविमोक्षणं च । परं परं नो वरिवर्त्ति पापं तत्त्यागतुल्यं नहि पुण्यमत्र ॥ ८ ॥ विद्युच्चलं जीवितमभ्रमालावच्चञ्चलं यौवनमत्र जानन् । मत्ताङ्गनापाङ्गचलं च वित्तं तज्ज्ञस्तदर्थं कुरुते किमंहः ॥ ९ ॥ विहाय धर्मं किमधर्ममेवं निषादवत्तत्कुरुषे त्वमार्य ! । पुंसा कृतज्ञेन कदाप्युदारा नोलङ्घनीयाः कुलदेशधर्म्माः ॥ १० ॥ गुरुवचनसुधाभिस्ताभिरेवं प्रसिक्तो हृदयगहनवर्ती निर्ववौ कोपवह्निः । अलभत लघुवृद्धिं तस्य संवेगवृक्षो भवति सदुपदेशो नो वृथा ह्युत्तमेषु ॥ ११ ॥ अहो ! विरुद्धानि बहून्यकार्षं कर्म्माणि जन्मप्रभृतीतनीतिः । नाद्भिर्न मृद्भिर्न च भूरितीर्थैः शुद्धिर्ममास्तीति दधौ स चिन्ताम् ॥ १२ ॥ उवाच वाचंयमनाथमेष मुनीश ! सत्यं तव वाक्यमेतत् । दुष्कर्मणानेन विना परं मे विकर्मणो नोदरपूरणं स्यात् ॥ १३ ॥ अत्युज्वले राजकुले प्रसूतिर्बभूव मे भूमितलप्रसिद्धे । अहं तु दुष्कर्मवशादिहैव यतीशजातोऽस्म्यतिशोचनीयः ॥ १४ ॥ कुलं च शीलं च यशः

सुखं च विनाशितं नाथ ! मयाधमेन । अस्मादृशां केवलमेव जन्म भवे भवेदत्र विनाशनाय ॥ १५ ॥ संजातसंवेगगुण-स्तदानीमात्मानमेवं स मुहुर्निनिन्द । शुभेन भावेन विभाव्य भव्यं दयापरः सूरिवरोऽब्रवीत्तम् ॥ १६ ॥ नीचोचितां वृत्तिमिमां विहायास्माभिस्त्वमागच्छ सहोच्चबुद्धे ! । धर्म्मप्रभावेण भवद्वयं हि भवेदमोघं भवतो यथेह ॥ १७ ॥ गुरोर्गिरं तां गरिमाभिरामामाकर्ण्य कर्णामृतवृष्टितुल्याम् । शान्तस्वभावो भवभीलुकस्तैश्चचाल सार्द्धं जयतस्तदा सः ॥ १८ ॥ सङ्गः सतामर्द्धलवं कृतोऽपि क्षिणोति पापान्यखिलानि पुंसाम् । हन्त्येव तापं चिरकालजातं सुधाकणः स्फीतमपीह पीतः ॥ १९ ॥ गच्छन्नजस्रं गुरुभिः समन्तैः सर्वत्र सुश्रावकलब्धमानः । तिलङ्गदेशाभरणं जगाम पुरं स उलंगरनामधेयम् ॥ २० ॥ श्रेष्ठी श्रेष्ठतमः समस्तवणिजां तत्रायया वन्दितुं सूरीन् दूरितपातकानथ मुदा तत्रौढरः प्रौढधीः । श्रद्धाबन्धुर-मानसं स जयतं दृष्ट्वोपविष्टं पुरोऽपृच्छत्कोऽयमिति स्फुटं निजविधिं कृत्वा समग्रं सुधीः ॥ २१ ॥ ज्ञात्वा वृत्तं तदीयं निज-गुरुवचसा श्राद्धमुख्यः स दक्षस्तं गेहं भव्यदेहं स्वयमनयदथो सार्द्रचित्तो विनीतम् । कुर्वन् कर्माणि नित्यं सुत इव जयतस्तत्र तस्थौ सुखेन कः स्थानं मानकारि त्यजति ततमतिः प्राप्य सन्तापहारि ॥ २२ ॥ तदा सदाचारनिरीक्षणेन धर्मप्रियोऽसावभवत्क्षणेन । कठोरमप्येति कथं न लोहं हिरण्यतां शुद्धरसप्रसङ्गात् ॥ २३ ॥ पूजोपहारं सकलं गृहीत्वा सोऽगाद्विहारे सह श्रेष्ठिनाऽथ । श्रीधर्मपर्वण्यखिलान्विलोक्य लोकान् जिनार्चानिरतांश्च दध्यौ ॥ २४ ॥ धन्या इमे ये निजजन्म सार्थं कुर्वन्ति नित्यं जिनपूजनेन । इहोरुपर्वण्यपि पुण्यहीनान्मत्तः परो नो वरिवर्त्ति दीनः ॥ २५ ॥ पूर्वे भवेऽ-कारि मया न पुण्यं तेनात्र जन्मन्यहमीदृगासम् । अतोऽपि मे भाविभवे भवित्री हीनागतिः पुण्यविवर्जितस्य ॥ २६ ॥



एकेन केचिज्जनुषार्जयन्ति धन्याः प्रधानानि जनुःशतानि । प्रमादवन्तः पुनरत्र तानि निष्पुण्यकाः केचन हारयन्ति ॥ २७ ॥ धर्मार्थकामोज्झितमूर्त्तिरत्र वर्त्ते वताहं पशुवन्नरोऽपि । सर्वोत्तमं मानुषजन्म लब्ध्वा मया मुधा धिग्गमितं मुधैव ॥ २८ ॥ दुष्प्रापमासाद्य मनुष्यजन्म यो मूढबुद्धिः कुरुते न धर्म्मम् । क्लेशैः स लब्धं बहुभिर्महाब्धौ चिन्तामणिं पातयति प्रमादात् ॥ २९ ॥ स चिन्तयन्नेवमरं धरित्रीं सिञ्चन् स्वनेत्रश्रवदश्रुवारैः । दयालुना श्रेष्ठिवरेण तेन तदालुलोके जिनभक्तिभाजा ॥ ३० ॥ बहूपरोधं स विधाय पृष्टस्तस्मै तदाचष्ट निजं स्वरूपम् । भावोऽभवद्यस्य किलेदृशस्ते धन्यो भवानित्यवदत्स इभ्यः ॥ ३१ ॥ कर्पूरागुरुचन्दनादिकमिदं लात्वा त्वमर्चां कुरु किं खेदं कुरुषे भविष्यति शुभं धर्म्मप्रभावात्तव । पूजैकापि जिनेशितुर्वितनुते साम्राज्यमल्पेतरं क्लृप्ता श्रीमदशोकवन्निजमनोभावेन भव्यात्मनाम् ॥ ३२ ॥ यस्य स्वं तस्य पुण्यं भवति हि स चिरं चिन्तयित्वेति तज्ज्ञः पुष्पाणि प्रौढबुद्धिः स्तनयमयमलात्पञ्चभिः स्वैर्वराटैः । भक्तिः प्रोद्भूतरोमाङ्कुरनिकरचितस्तैः समानर्च युक्त्या धन्यंमन्यो जिनेन्द्रं निखिलसुखकरं चानमन्मानहीनः ॥ ३३ ॥ अद्याभवत्सफलता नयनद्वयस्य देव! त्वदीयचरणाम्बुजवीक्षणेन । अद्य त्रिलोकतिलक! प्रतिभासते मे संसारवारिधिरयं चुलुकप्रमाणः ॥ ३४॥ एवं नुत्वा च नत्वा जिनपतिमगमन्मन्दिरं सुन्दराशश्चक्रे तत्रोपवासं सदहनि स महद्वासनावासितान्तः । तादृग् दृष्ट्वा विवेकं सुकृतमतिरलं श्रेष्ठिमुख्यः स हृष्टः तं मेने पुत्रतुल्यं व्रजति निजगुणैर्मान्यतां वा न कोऽत्र ॥ ३५ ॥ स्तोकैरेव दिनैरनूनसुमनोभावोऽभजत्पञ्चतां स प्राप्तानशनः स्मरन् जिनवरं गर्हन्निजं दुष्कृतम् । श्रीमद्गूर्जरमण्डले त्रिभुवनाभिख्याङ्कजन्माऽभवन्नाम्ना श्रीकुमरः सुरोपमवपू राजन्! भवेऽस्मिन् भवान् ॥ ३६ ॥ यत्पञ्चाशत्संख्यवर्षै वितेने श्रेयोऽमेयं



प्राग्भवे श्रेष्ठिसञ्जात् । तावन्मात्रैर्वत्सरैरत्र यातैः प्राज्यं राज्यं तेन राजंस्त्वयात्तम् ॥ ३७ ॥ चक्रे पापं यत्पुरा जन्मनि प्राग् दुःखान्यासंस्तेन तेऽस्मिन्भवे प्राक् । कर्माभुक्तं क्षीयते नो नरेश ! रम्यारम्यं कल्पलक्षैरपीह ॥ ३८ ॥ स ऊढरः श्रेष्ठिवरो विपद्य मन्त्री बभूवोदयनाभिधानः । श्रीवाग्भटाख्याम्रभटाभिधानौ त्वन्मन्त्रिणौ तत्तनयावभूताम् ॥ ३९ ॥ पुराभवस्नेहवशादमीषां प्रीतिः पुरावत्समभूदिहापि । आराधितं जन्मनि प्राक्तने यत्तत्तेन भूयोऽपि नरेश ! लब्धम् ॥ ४० ॥ आराध्य सम्यग् जिनधर्ममत्र धर्म्मोन्नतिं भूरितरां विधाय । विषप्रयोगात्समवाप्य मृत्युं स्वर्द्धाम यातासि समाधिलीनः ॥ ४१ ॥ वयमपि चिरकालं संयमं पालयित्वा स्वनशनविधिना च प्राप्य मृत्युं सुखेन । निखिलसुखमनोज्ञं देवलोकं तुरीयं निहतसकलशोकं सङ्क्रमिष्याम आर्य ! ॥ ४२ ॥ भरतभुवि नरत्वं प्राप्य भूयोऽपि भव्यं कृतसुकृतमनस्कौ त्यक्तभोगाभिलाषौ । चरमवयसि शुद्धं संयमं पालयित्वा शिवपदमपसादं भूप ! यास्याव आवाम् ॥ ४३ ॥ श्रीमत्सीमन्धरनिगदितं जन्मवृत्तं निशम्य पद्मावक्त्रात्तव नृप ! मया शंसितं भूतभावि । अर्हत्सेवाफलमविकलं स्वानुभूतं प्रभूतं ज्ञात्वा चित्तं निजमविचलं तत्र नित्यं विधेहि ॥ ४४ ॥ भूपः प्रोचे प्रभुमवितथं सर्वमेतत्तथापि कश्चिच्चिन्ताधूतिततिहरः प्रत्ययो वर्त्ततेऽत्र । अद्याप्येकोढरधनिगृहे विद्यते तत्र दासी पृष्टास्पष्टं गुरुरिति जगौ सा वदिष्यत्यशेषम् ॥ ४५ ॥ सम्प्रेष्य स्वनरांश्चकार नृपतिः शीघ्रं परीक्षां ततो वृत्ते तत्र सचित्रमाप नितरां जातेर्यथार्थे हृदि । सूरिभ्यः कलिकालसर्वविदिति ख्यातं मुदा दत्तवान् नामासौ प्रससार भूमिवलये तत्सूर्यभावत् स्वयम् ॥ ४६ ॥ इत्थं सन्देहवृन्दं दलयनविमलज्ञानभानुप्रभाभि–(?) भिंन्दन्मिथ्यामतानि त्रिदशनतपदः स्थापयन् जैनधर्म्मम् । सर्वज्ञोपज्ञमन्यद्विदधदधिध्रुवं वाङ्मयं नव्यमेवं सूरिः श्रीहेमचन्द्रो

जगति विजयते सर्वविद्वद्युगेऽस्मिन् ॥ ४७ ॥ श्रीरत्नसिंहगुरुपादसरोरुहालिश्चारित्रसुन्दरकविर्यदिदं ततान । तस्मिन् कुमारचरिते भववर्णनाख्यः सर्गो निसर्गरुचिरो नवमः समाप्तः ॥ ४८ ॥

॥ इति भट्टारकश्रीरत्नसिंहसूरिशिष्योपाध्यायश्रीचारित्रसुन्दरगणिविरचिते श्रीकुमारपाल-
चरिते महाकाव्ये भववर्णनो नाम नवमः सर्गः ॥ ग्रन्थाग्रं १९२ ॥

## ॥ अथ दशमः सर्गः ॥

तन्वन्नथो सूरिवरस्य सेवां निनाय कालं स बहुं महेन । तयोर्वियोगासहयोर्बभूव स्नेहः सदा मांसनखोपमेयः ॥ १ ॥ प्रीतिः प्रतीतिः प्रभुता प्रतिष्ठा तस्याभवद्भूमिपतेः प्रकृष्टा । गुरौ च धर्म्मे वपुषि त्रिलोक्यां पक्षे सिते चन्द्रकलेव नित्यम् ॥ २ ॥ श्रीमूलराजान्वयभूपतीनां लूतामहाव्याधिरिहान्तकाले । संजायते लक्षनरेशमातुः शापात्सतीचक्रमणेः क्रमेण ॥ ३ ॥ सर्वाङ्गभङ्गं जनयन् स रोगो भोगापहः प्रादुरभूदथास्य । तद्वेदनाविह्वलसर्वगात्रो धात्रीधवः स्थातुमलं न सोऽभूत् ॥ ४ ॥ न मान्त्रिका नो गणका न वैद्या रोगं निहन्तुं तमलंबभूवुः । शक्तोऽपि शक्नोति किमम्बुराशिं को लुप्तमर्यादमहो ! निरोद्धुम् ॥ ५ ॥ तद्यातनाबाधितमूर्त्तिरुच्चैः पप्रच्छ सूरिं गदशान्तिहेतुम् । दुर्भिक्षबाधाविधुराः स्मरन्ति विहाय लोका जलदं किमन्यम् ॥ ६ ॥ आयुर्घनं श्रीकुमरस्य वीक्ष्य ते दक्षमुख्या अवदन्विमृश्य । निवेश्यतेऽन्यो यदि कोऽपि राज्ये हित्वाऽमयस्त्वां तमयं प्रयाति ॥ ७ ॥ उवाच चातुर्यनिधिर्नरेशो वाचंयमेशं स चिरं विचार्य । हित्वापि सत्त्वं भगवंश्चि-

रायुः श्रीविक्रमार्कोऽपि पुरा न जज्ञे ॥ ८ ॥ स्वदेहदानेन दयार्द्रचित्तः पारापतं मेघरथो ररक्ष । तत्याज राज्येन समं दयावान् राजीमतीं नेमिजिनो रजोवत् ॥ ९ ॥ धर्ममर्मविददान्निजचर्म्मवर्म्म कर्णनृपतिर्विचनार्थम् । आयुरस्थिरतरं किल जानन् दत्तवानिह निजास्थि दधीचिः ॥ १० ॥ निहन्म्यहं किं निजजीवितार्थं वराकमन्यं परमार्थविज्ञः । रङ्कस्य राज्ञोऽपि च मृत्युभीतिः स्याज्जीविताशापि समा क्षमायाम् ॥ ११ ॥ निवारितां मारिमिमां निजार्थे कुर्वन्नहं हास्यपदं जने स्याम् । कष्टेऽप्यनष्टोत्तमधर्मभावा न सत्तमाः स्वं नियमं त्यजन्ति ॥ १२ ॥ गिरः सुधासारसमा निपीय दयाकिरस्ता अवदद्यतीशः । निवेश्य राज्ये स्वयमेव दुःखं तत्ते हरिष्यामि नरेश्वराहम् ॥ १३ ॥ अवोचदुच्चैश्चकितो नरेशो भूयोऽपि पश्यन् प्रभुवक्त्रपद्मम् । अनर्घ्यमेतत्किमहं करोमि कार्यं विचार्यादिशतार्यवर्याः ॥ १४ ॥ को देववृक्षं पिचुमन्दहेतोश्चिन्तामणिं काचकृते निहन्ति । अजानिमित्तं सुरधेनुमत्र विनाशयेत्कः करिणं खरार्थे ॥ १५ ॥ सम्प्राप्तसंसारसमुद्रपारान् विश्वैकसारान् हतमोहमारान् । जगद्धितांस्तद्विनिहत्य युष्मानवामि किं स्वं विगुणं गुणज्ञ ! ॥ १६ ॥ रोगं "निहन्तुं मम शक्तिरस्ति स्वाङ्गागतं योगबलेन राजन् ! । अलं विलम्बेन मदुक्तमेतद्विधेहि तत्सूरिरवोचदेवम् ॥ १७ ॥ ततः कुमारो महता महेन न्यवीविशत्सूरिवरं स्वराज्ये । सोपायनस्तं प्रणनाम मौलौ दध्रे पवित्रं स्वयमातपत्रम् ॥ १८ ॥ सप्राभृता भूपतयः परेऽपि समेत्य वेगादनमन्मुनीशम् । तत्पार्श्वयोर्मन्त्रिवरौ रयेण सच्चामरे चालयतः स्म हर्षात् ॥ १९ ॥ हित्वा कुमारं परिमुक्तराज्यं समेतु मामेष गदोऽधुनैव । उवाच वाचंयमचक्रवर्ती तदा मुदैवं स सभासमक्षम् ॥ २० ॥ ततः कुमारं स रयेण हित्वा लूतामयः सूरिशरीरमार । कुद्धस्तृतीयज्वरवन्निजारिं गृह्णन्ति यद्वा छलमेव भूताः ॥ २१ ॥ श्लिष्टं रुजा तत्र गुरोः

शरीरमनीदृशं तत्सहसा बभूव । सङ्क्रान्तमन्तः किल कालकूटं भिनत्ति देहं निखिलं क्षणेन ॥ २२ ॥ रोगं हन्तुं निश्चलाङ्गः स योगी प्राणायामं पूरकाख्यं वितेने । आकृष्योर्द्ध्वं वायुमाधारपीठात्पुष्टं कोष्ठे धारयामास धृष्टः ॥ २३ ॥ ऊर्द्ध्वास्यं प्राग् नाभिपद्मं विधाय नीत्वा वातं हृत्सरोजे दधार । भित्त्वा ग्रन्थिं वायुना मन्दमन्दं तन्द्राहीनोऽपूरयद्ब्रह्मरन्ध्रम् ॥ २४ ॥ रुद्ध्वा द्वाराण्येष शेषाणि दक्षः कृत्वा सम्यग् रेचकं स्वाननेन । ऊर्द्ध्वं नीत्वा तं बही रोगपिण्डं चिक्षेपायं लीलयाऽलाबुपात्रे ॥ २५ ॥ ऊर्द्ध्वं नीते सूर्यबिम्बे समन्ताच्चन्द्रस्तापाद्राक् सुधाभिर्ववर्ष । श्लिष्टं ताभिः सर्वरोगापहाभिर्वेगादङ्गं चङ्गमासीदमुष्य ॥ २६ ॥ तुम्बं तद्राग् मन्त्रशक्त्यैव नीत्वा स्पर्शानर्हं सोऽन्धकूपे मुमोच । हित्वा धर्मद्वेषिणं नैष रोगो वंशेऽप्यास्मिंस्ते भविष्यत्यदोऽवक् ॥ २७ ॥ गुरुप्रसादाद्धतसर्वसादात् शान्ते गदे तत्र स मृत्युरूपे । मेने जनुः स्वस्य नवं नरेशस्तेने महं भूरितरं पुरे स्वे ॥ २८ ॥ विधाय यात्रां विमलाचलेऽर्हं नेमीश्वरं रैवतके च नत्वा । गृह्णाम्यहो ! मानवजन्मसारमिदं स दध्यौ नृपतिर्हृदन्तः ॥ २९ ॥ शुद्धे मुहूर्त्ते गुरवो वितेनू राज्ञोऽस्य सङ्घेशललाममुच्चैः। तदा चरः कोऽपि समेत्य वेगाद्व्यजिज्ञपत्तं रचिताञ्जलिः सन् ॥ ३० ॥ सार्द्धं नरेशैर्बहुभिः समेति कर्णो नृपस्त्वां प्रति डाहलेशः । धर्मान्तरायं तमवेत्य बाढं गुरोः पुरः स्वं कुमरः शुशोच ॥ ३१ ॥ जातोऽन्तरायो मदभाग्ययोगादयं गरीयानिह धर्मकृत्ये । मनोरथा भाग्यविवर्जितानां यद्वा न सिध्यन्ति निरुक्तमेतत् ॥ ३२ ॥ मितम्पचश्रीरधमोत्तमेच्छा सुरङ्गधूली कुसुमं वनस्य । छाया च कूपस्य विनाशमेते पञ्चापि तत्रैव किल प्रयान्ति ॥ ३३ ॥ नीचा अपीच्छां रुचिरां कदाचित्कुर्वन्त्यहो ! सज्जनसङ्गमेन । रुन्धन्ति तेषां सततार्जितानि तमांसि तां पुण्यविवर्जितानाम् ॥ ३४ ॥ स चिन्तयन्नेवमवादि तेन श्रीसूरिणा

कालविदा तदानीम् । भविष्यति द्वादशमे समाधियामे स्वयं ते कुरु माऽधृतिं तत् ॥ ३५ ॥ तत्सूरिवाक्यं हृदये निधाय
व्यधात्स यात्रोद्यममादरेण । चरो द्वितीयेऽहनि तावदेत्य न्यवेदयत्कर्णनरेशमृत्युम् ॥ ३६ ॥ सङ्घेन साकं स चतुर्विधेन
बुधेन सार्द्धं गुरुणा च तेन । नन्तुं जिनं श्रीविमलाचलेऽगाद् युतो नरेशैर्बहुभिः कुमारः ॥ ३७ ॥ पुण्डरीकगिरिराजमण्डनं
पापतापनिखिलाधिखण्डनम् । तत्र नाभितनयं विनयाढ्योऽपूजयज्जिनपतिं मुदितोऽसौ ॥ ३८ ॥ पश्यंस्तीर्थं मन्यमानः
कृतार्थं स्वं जन्मासौ मण्डपं द्रागुपेत्य । कृत्वा मुक्ताशुक्तिमुद्रां नरेन्द्रो मन्द्रारावं सोऽस्तवीच्छ्रीजिनेन्द्रम् ॥ ३९ ॥ कर्मरेणु-
हरणैकसमीर ! मोहमल्लमदमर्दनवीर ! । लब्धसंसृतिमहोदधितीर ! श्रीजिनेन्द्र ! जय मन्दरधीर ! ॥ ४० ॥ ये यजन्ति
तव पादपङ्कजं तान् भजन्ति न जनुर्जरारुजः । आश्रयन्ति तव नाथ ! ये मतं सन्ततं भवति तन्मतं समम् ॥ ४१ ॥
नंनमीति तव यः पदौ मुदा तं नमन्ति निखिलाः सुराधिपाः । यत्तनोति तव पादयोर्नतिं तच्छिरो नमति नापरं पुनः
॥ ४२ ॥ शासनस्य तव शासनान्तरैर्ये वदन्ति समतां जडाशयाः । ते विषेण सदृशं वतामृतं श्रीजिनेश ! गणयन्त्यचे-
तनाः ॥ ४३ ॥ विहाय ये त्वां जगदेकनाथं श्रयन्ति देवानपरान् शिवाय । ते कल्पवृक्षं परिमुच्य मूढा गृह्णन्ति धत्तूरतरुं
फलार्थम् ॥ ४४ ॥ केऽपि रागनिभृता मयेक्षिताः क्रोधरुद्धवपुषः परे सुराः । वीतदोषकलुषोऽधुना भवानेक एव भगवन् !
विलोकितः ॥ ४५ ॥ नमोऽस्तु तुभ्यं जिन ! चिन्मयाय नमोऽस्तु तुभ्यं जगदीश्वराय । नमोऽस्तु ते सेवकशङ्कराय
नमोऽस्तु ते प्राप्तमहोदयाय ॥ ४६ ॥ भ्रान्तोऽत्र तीर्थानि बहूनि नाथ ! तेष्वाद्यलोके किल तारकस्त्वम् । तत्तावकीने
चरणेऽस्मि लग्नः कृत्वा कृपां तारय मां कृपालो ! ॥ ४७ ॥ ज्ञातात्र विश्वे भगवंस्त्वमेकस्त्वत्तः परो नास्ति कृपापरोऽपि ।

मत्तः कृपापात्रमिहापरो नो तत्किङ्करं स्वीकुरु मां शरण्य ! ॥ ४८ ॥ त्वं जीवितं त्वं जनकस्त्वमम्बा त्वं मे पतिस्त्वं गतिरद्वितीया । सीदन्तमेनं निजकिङ्करं तत्स्वामिन् ! कृतार्थीकुरु वीक्षणेन ॥ ४९ ॥ स्तवीमि नान्यं न परं वदामि भजामि नान्यं न परं व्रजामि । तन्मां पतन्तं भवसागरान्तः किं त्रायसे नो करुणासमुद्र ! ॥ ५० ॥ न चक्रिशक्रादिपदं समीहे त्वदाज्ञया हीनमहं निरीह ! । रङ्कत्वमप्यस्तु भवान्तरेऽपि स्वामिंस्त्वदाज्ञावशवर्त्तिनो मे ॥ ५१ ॥ संसारनीरनिधितारक ! चिन्तितार्थ ! श्रीरत्नसिंहगुरुसत्त्वविराजमान ! । मायादिदोषरहितां निहतान्तरारे ! चारित्रसुन्दरमतिं जिन ! देहि मह्यम् ॥ ५२ ॥ स्तवनमिदमुदारं भक्तिसारं विधत्ते जिन ! वृजिनहरं यस्तावकं कण्ठपीठे । सकलविपदपेतं नित्यसम्पत्समेतं भजति विमलभावोऽसौ महानन्दसौख्यम् ॥ ५३ ॥ ध्वस्तसर्ववृजिना जिनमूर्त्तीरर्चयत्स निखिला अपि हर्षात् । सूरिराजवचनेन समग्रं सङ्घनायकविधिं विदधे च ॥ ५४ ॥ भूरिभूरिनिचयं प्रवितीर्य देवलोकमनृणं विदधेऽसौ । नो तथापि विरराम रसेन दानबुद्धिरसमा कुमरस्य ॥ ५५ ॥ अर्चयन्मधुमतीप्रमुखेषु श्रीजिनेन्द्रभुवनानि पुरेषु । स्थापयन् जिनमतं सुरदेशे रैवताद्रिमगमत्स नरेशः ॥ ५६ ॥ तत्र यादवकुलोदयसूर्यं ध्वस्तमोहमदनाखिलशौर्यम् । आनमद्धवलताऽतनुनेमिं नेमिमेष विनिमेषदृगर्च्यम् ॥ ५७ ॥ सज्जनः सुजननः किल मन्येऽचीकरज्जिनविहारमिमं यः । चिन्तयन्निति चिरं स चकार चारुपुष्पनिवहेन जिनार्चाम् ॥ ५८ ॥ भरत इव कुमारस्तीर्थयात्रां स कुर्वन् जलद इव वितेने दानसङ्ख्यां न दक्षः । गुरुरिव नयवाक्यैः प्रीणयन् सर्वसङ्घं हरिरिव निजद्रङ्गं भूरिरङ्गं विवेश ॥ ५९ ॥ इति गुरुवरिवस्यां वश्यचित्तो वितन्वन्

प्रवचनजलराशेः सूक्तरत्नानि चिन्वन् । निखिलसुखनिधानं देवलोकोपमानं समयमयमनैषीच्छ्रीकुमारो महान्तम् ॥ ६० ॥

॥ इति श्रीकुमारपालचरिते दशमसर्गे प्रथमो वर्गः ॥



श्रीरामवन्निर्मलनीतिधाम्नि तस्मिन् धरां शासति दीप्तधाम्नि । नारातयो भीतय ईतयोऽपि जनेऽभवन् क्वापि सुधर्मभाजि ॥ १ ॥ श्रीवाग्भटाख्याम्रभटाभिधानौ तौ मन्त्रिणौ चक्रतुरन्यचिन्ताम् । स्वयं तु सद्धर्मपरः करोति सुरेशवद्राज्यमसौ नरेशः ॥ २ ॥ अथ सरणमगातां तावकस्मादमात्यावुदयनतनयौ द्राग् दैवयोगादलङ्घ्यात् । कलितविपुलशोकस्तत्र लोकोऽखिलोऽपि प्रकटितघनसादो दीननादं रुरोद ॥ ३ ॥ श्रीहेमचन्द्रगुरवोऽप्युरुभाग्यवन्तस्तेऽपालयंश्चतुरशीतिसमा निजायुः । ज्ञात्वावसानसमयं समयैकविज्ञाः आराधनां विदधिरेऽनशनेन सार्द्धम् ॥ ४ ॥ स्वामिन् ! विमुच्य किमु मामिह देवलोकं गच्छेश ! गच्छसि वितुच्छकलानिधान ! । पूर्णापि सर्वजनताभिरियं धरित्री शून्या भविष्यति मुनीश ! विना भवन्तम् ॥ ५ ॥ एवं वदन्तमवनीपतिमाह सूरिर्मा खेदमुद्वह नरेश ! विचारविज्ञ ! । षण्मासशेषमिह तेऽपि किलायुरस्ति गन्ता भवानपि ततः परलोकमाशु ॥ ६ ॥ भूपाय शोकविधुराय निवेद्य भावि राज्यादिवृत्तमखिलं प्रशमं दधानाः । श्रीवीतरागचरणस्मरणैकचित्ताः सूरीश्वरा दिवमगुः कमलासनस्थाः ॥ ७ ॥ कर्पूरागुरुचन्दनप्रभृतिभिर्द्रव्यैः सुगन्धैर्विभोः संस्कारं वपुषश्चकार कुमरो यद्वज्जिनेन्दोर्हरिः । धातः ! किं कृतवानसीति च मुहुर्निन्दन् विधिं निर्भरं स्मृत्वा तद्गुणसंचयं मृतिसमामानर्च्छ मूर्च्छामसौ ॥ ८ ॥ शीतोपचारकरणेन स जातसंज्ञस्तज्ज्ञोऽपि मोहविवशो विललाप भूपः । दृष्ट्वापि सूरिमरणं न विदीर्यते यद्

ही वज्रकर्कशमिदं हृदयं धिगस्तु ॥ ९ ॥ कण्टेश्वरीं गुरुसुरीं प्रकटप्रभावां बद्ध्वा निनाय लघु यो निजमन्त्रशक्त्या । सोऽयं सुरासुरनरेश्वरसेव्यपादः श्रीहेमसूरिरभजत्सुरलोकमद्य ॥ १० ॥ धिग् धिग् बलं परिजनं स्वजनं धिगस्तु धिग् वैभवं विषयसौख्यमहो ! धिगेतत् । यज्जन्तुरत्र निजकर्मवशः क्षणेन सर्वं विहाय परलोकमयं प्रयाति ॥ ११ ॥ अहह सृजसि धातर्विश्वविश्वावतंसं पुरुषमखिलविद्यावन्तमुद्यत्प्रशंसम् । तमपि यमसमीपं प्रापयन्नात्मनैव व्रजसि बत ! विनाशं किं कृतघ्नेश ! न त्वम् ॥ १२ ॥ ये विश्वोरुपरोपकाररसिका ये सर्वसाधारणा ये दीनार्त्तिहराः स्फुरद्गुणधरा ये शीलरत्नाकराः । ये विद्वज्जनमौलिमण्डननिभा ये सज्जनानन्दना धिक् सन्तः कृपणेन तेऽपि विधिना दीर्घायुषो नो कृताः ॥ १३ ॥ संबोधितः स निपुणैरवलम्ब्य सत्त्वमादाय भस्म गुरुदेहभवं ववन्दे । तच्चाददेऽखिलजनोऽप्यखिलामयघ्नं गर्त्ताऽभवद्गुरुतरात्र यथा क्रमेण ॥ १४ ॥ रक्षाकरामखिलरोगहरां विभूतिमारात्समेत्य बहुकालमलाज्जनौघः । गर्त्ता क्रमेण गुरुनामधरा बभूव सा श्रूयत यदणहिल्लपुरेऽधुनापि ॥ १५ ॥ ताम्बूलचन्दनविलेपनभोगहीनः सुष्वाप शोकविवशः स दशाहमुर्व्याम् । इत्यादि पण्डितवचोभिरमुञ्चदुच्चैः शोकं कुमारनृपतिर्विदिताखिलार्थः ॥ १६ ॥ अम्भोधीनपि शोषयन्ति चतुरो येऽनन्तवीर्यान्विता ये मेरुं दलयन्ति वज्रकठिनैर्मुष्टिप्रहारैरपि। दण्डीकृत्य सुराचलं वसुमतीं छत्राकृतिं कुर्वते यावत्तेऽपि जिनाः कृतान्तवदने कालेन सर्वे गताः ॥ १७ ॥ लुप्तं येनान्यतेजः परमपि निखिला बोधिता नीरजाली भाभिर्विश्वं निजाभिः सकलमपि किलोद्भासितं येन वेगात् । आक्रान्तं भूमिखण्डं निखिलमपि पदैर्येन विध्वस्तशङ्कं संप्रत्यस्तं गतोऽसौ हतविधिवशतः शोचनीयो न भानुः ॥ १८ ॥ भूपः श्रीकुमरः स्मरन् गुरुगुणान् संवेगरुद्धाशयः पण्मासानिति सोऽनयद्बहुतरं

तत्तत्कथाकर्णनैः। चैत्ये स्वं बलिमात्मनैव मुदितोऽथाढौकयत्प्रौढधीर्ज्ञात्वा सूरिगिरावसानसमयं चौलुक्यचूडामणिः ॥ १९ ॥ भ्रातृव्यदत्तगरदोषविशोषिताङ्गः श्रीवीतरागचरणस्मरणैकचित्तः । आयुः प्रपाल्य षडशीतिसमाप्रमाणं शिश्राय देवभुवनं स कुमारभूपः ॥ २० ॥ याते तत्र परत्र सर्वजनतातातोपमे भूपतौ हाहारावपरः पराधृतिधरश्चक्रन्द लोकोऽखिलः । नागृह्णन्पशवोऽपि शोकविधुराः ! स्वाहारनीरादिकं नीलीकज्जलसान्द्रकर्दमभरैर्लिप्ता इवासन् दिशः ॥ २१ ॥ हा चौलुक्य-कुलावतंस ! वसुधाश्रृङ्गारसद्धार ! हा हा विश्वाभयदानदक्ष ! रमणीप्रत्यक्षकन्दर्प ! हा । हा लोकोत्तमतात ! दानदलितोद्दारिद्रसंदोह ! हा हा धर्मप्रिय ! हा कुमारनृपते ! क्वासि प्रतीक्षस्व नः ॥ २२ ॥ जीमूते त्वयि विश्वतापशमने दूरं प्रयाते दिवं पूर्णं शंवरराशिभिश्चिरतरं सम्मानसंमानसम् । तप्तं तीव्रकरैर्गमिष्यति विभो ! शोषं क्षणेनाधुना हंसस्तद्विरहासहः पुनरयं स्थानान्तरं यास्यति ॥ २३ ॥ बुद्धिर्देवगुरौ कला सितरुचौ गाम्भीर्यमम्भोनिधौ धैर्यं देवगुरौ क्षमा भुवि रवौ प्राज्यः प्रतापस्तव । स्थानेष्वेव कलानिधान ! सकलान्येतानि यास्यन्त्यहो ! क्वेयं जीवदया गते त्वयि पुनर्याता विचिन्त्या प्रभो ! ॥ २४ ॥ सर्वानात्मजवत्त्वया प्रतिदिनं जन्तूनिमान्पालितान् प्रीत्या कः क्षितिपालमस्तकमणे ! तान् पालयिष्यत्यहो ! एवं वाष्पनिरुद्धकण्ठनयना वाग्भिर्निजाभिस्तदा प्रोचुः प्राणिगणा जलस्थलनभोयाना दधानाः शुचम् ॥ २५ ॥ धर्म्मात्मन् ! परमार्हत ! प्रियकर ! क्ष्मापालचूडामणे ! विद्वच्छेखर ! मारिवारक ! मृतद्रव्यप्रभोक्तर्विभो ! । तद्भूयोऽवतरैकशोऽत्र करुणामाधाय भूमण्डले एते त्वद्विरहासहा बहुतरं विज्ञापयन्त्यङ्गिनः ॥ २६ ॥ एवं सर्वे कुमारं प्रकटितकरुणाः प्राणिनः संस्तुवन्तः पीत्वा तत्कीर्त्तिगङ्गां निहतकलिमलां निर्वृतिं लेभिरे ते । स्वर्नारीभिः सहोच्चैः सुरगणमहितः पूर्णसर्वाभिलाषः

श्रीमान् स्वधाम्नि नित्यं सुविषयविषयं सोऽपि सौख्यं सिषेवे ॥ २७ ॥ एवं ये जिनशासनोन्नतिततिं कुर्वन्ति भव्याङ्गिनस्तेऽत्रामुत्र च सच्चरित्रविदिताः स्युः सम्पदामास्पदम् । भुक्त्वा दानफलं चिरं दिविपदावासेषु वाञ्छातिगं स्वच्छं शाश्वतमाश्रयन्ति विततं कैवल्यसौख्यं क्रमात् ॥ २८ ॥

## ॥ अथ प्रशस्तिः ॥

नित्यं सच्छुक्लपक्षस्थितिरतिविशदो नाशितश्यामपक्षो विध्वस्ताशेषदोषो बहुमुनिसहितो भूरिशोभाभिरामः ।
विश्वाह्लादं ददानो हतनिखिलतमाः शश्वदासोदयोऽत्र श्रीमान् श्रीचन्द्रगच्छोऽपरविधुवदयं राजते शुद्धवृत्तः ॥ २९ ॥
कल्याणावलिशालितोऽत्र सुमनःश्रेणीश्रितो विश्रुतः श्रीमान् वृद्धतपोगणो विजयतेऽयं मेरुवन्निश्चलः ।
विश्वालङ्करणस्य विस्तृतिजुषः सन्नन्दनस्यान्वहं भान्ति स्फातियुतस्य यस्य पुरतः पादा इवान्ये गणाः ॥ ३० ॥
तस्मिन् विस्मयकारिचारुचरितश्चारित्रचूडामणिः श्रीमान् श्रीविजयेन्दुसूरिरभवद्भव्याङ्गिचिन्तामणिः ।
तत्पट्टे समभून्महीन्द्रमहितः श्रीक्षेमकीर्त्तिर्गुरुः कांस्कान्नो विबुधान् धिनोति नितरां यत्कल्पवृत्तिस्तता ॥ ३१ ॥
श्रीरत्नाकरसूरयः समभवन् ज्ञानाम्बुरत्नाकराः कीर्त्तिस्फूर्तिमनोहराः शुभगणश्रेणीलताम्भोधराः ।
यन्नाम्नात्र तपोगणोऽयमभजद्रत्नाकराख्यां परां ख्यातेन क्षितिमण्डलेऽपि सकले सत्यां तमोहारिणा ॥ ३२ ॥

तस्यानुक्रमपूर्वशैलतरणिः कामद्विपोद्यत्सृणिः सूरीशोऽभयसिंहप्रत्ययसिधू ( प्रत्ययमभू- ) र्योगीन्द्रचूडामणिः ।
तत्पट्टे प्रकटप्रभावविदितो विध्वस्तवादिर्मुनिर्जज्ञे श्रीजयपुन्द्रसूरिरसमो भव्यात्मचिन्तामणिः ॥ ३३ ॥
कीर्त्तिर्यस्य निरस्ततापनिवहा सच्छीलदण्डस्थिता पद्यचन्द्रकलोज्ज्वला दशदिशां श्वेतातपत्रायते ।
तत्पट्टे स्फुटवादिकुञ्जरघटासिंहो हतांहोव्रजः सूरीन्द्रो जयताच्चिरं गणधरः श्रीरत्नसिंहाभिधः ॥ ३४ ॥
तस्यानेकविनेयसेवितपदाम्भोजस्य भव्यावलीवक्त्रनेत्रचकोरचन्द्रसदृशस्यानम्रभूमिपतेः ।
शिष्याणू रचयाञ्चकार रसिकश्चारित्ररम्याभिधो विश्वाश्चर्यकरं कुमारचरितं नानाविचारोत्तरम् ॥ ३५ ॥

चक्रे यदभ्यर्थनया पवित्रं चरित्रमेतन्मयका विचित्रं ।
प्रवर्त्तिताशेषशुभः स नित्यं जीयाद्गणीशः शुभचन्द्रसंज्ञः ॥ ३६ ॥
विना जिनेन्द्रं श्रुतधारिणं वा सम्यक् परो वेत्ति न शब्दशास्त्रम् ।
अतो बुधैः प्रेम विचिन्त्य शोध्यं नान्योऽस्ति धर्मो हि परोपकारात् ॥ ३७ ॥

ये मज्ज्ञाज्ञतमोऽहरश्चिजवचोभाभिः प्रभावाश्रिता विश्वोद्द्योतकराः प्रतापनिकरा दोषापहाः सूर्यवत् ।
ते मोदं ददताममन्दमुदितानन्दाः सदानन्दनाः श्रीमच्छ्रीजयमूर्तिपाठकवरा योगीश्वराः सर्वदा ॥ ३८ ॥

श्रीरत्नसिंहगुरुपादसरोरुहालिश्चारित्रसुन्दरगणिर्यदिदं वितेने ।
तस्मिन् कुमारचरितेऽनशनाभिधानः सर्गः समाप्तिमगमद्दशमः शमाढ्यः ॥ ३९ ॥

॥ इति श्रीवृहत्तपागच्छनायकभट्टारकश्रीरत्नसिंहसूरिशिष्योपाध्यायश्रीचारित्रसुन्दरगणिविरचिते श्रीकुमारपालचरिते महाकाव्ये दशमः सर्गः ॥ ग्रन्थाग्रं १६४ ॥

द्वात्रिंशदधिकं ज्ञेयं सहस्रद्वितयं बुधैः । चरित्रेऽत्र विचित्रेऽपि पद्यैर्हृद्यैरनुष्टुभाम् ॥ १ ॥ सर्वग्रन्थाग्रम् ॥ २०३२ ॥



## ॥ समाप्तं कुमारपालचरितम् ॥

